सुवस्त्राभरणं कान्तिदेवपूजारतिस्तथा ।
सुप्रीतिर्वस्त्रलाभश्च[1] चन्द्रस्यान्तर्गते बुधे ॥ ११७

ग्रन्थान्तरे—

चन्द्रस्यान्तर्गते सौम्ये केन्द्रलाभत्रिकोणगे ।
स्वक्षेत्रे स्वांशके सौम्ये तुङ्गे वा बलसंयुते ॥ ११८
क्षीरान्नं राजसंमानं पीतवस्त्राश्वलाभकृत् ।
विद्याविनोदसंगोष्ठी धनवृद्धिस्सुखाधिकम् ॥ ११९
सन्तानप्राप्तिसन्तोषो वाणिज्यधनलाभकृत् ।
वाहनच्छत्रसंयुक्तं नानालङ्कारभूषणम् ॥ १२०
नीचास्तबलसंयुक्ते षष्ठाष्टव्ययराशिगे ।
दारपुत्रादिपीडा च देहपीडा मनोव्यथा ॥ १२१
विदेशगमनं चैव नृपचोराग्निपीडनम् ।
लग्नाधिपेन संयुक्त आदौ सौख्यं धनागमः[2] ॥ १२२
मध्ये तु देहपीडा च धननाशो महद्भयम् ।
अन्ते[3] क्लेशकरं चैव निगलं बन्धुनाशनम् ॥ १२३
दायेशात्केन्द्रकोणे वा लाभे वा धनगेऽपि वा ।
विवाहो[4] यज्ञदीक्षा च दानधर्मशुभादिकम् ॥ १२४
राजप्रीतिकरं चैव ज्ञानसिद्धिस्सुखाधिकम् ।
मुक्तामणिप्रवालादिवाहनाम्बरभूषणम् ॥ १२५
आरोग्यमतिसौख्यं च सोमपानाधिकं सुखम् ।
दायेशात् षष्ठराशिस्थे[5] रन्ध्रे वा रिफगेऽपिवा ॥ १२६
तद्भुक्तौ मरणं व्याधिः कृषिगोभूमिनाशनम् ।
कारागृहप्रवेशश्च[6] दारपुत्रादिपीडनम् ॥ १२७
द्वितीयद्यूननाथे तु ज्वरपीडा महद्भयम् ।
छागदानं प्रकुर्वीत विष्णुसाहस्रकं जपेत् ॥
शान्तिमारोग्यमाप्नोति सर्वत्र विजयी भवेत् । १२८

---

1. लाभं च
2. धनागमम्
3. अन्त्ये
4. विवाहं
5. दायेशाष्षष्ठराशिस्थे
6. प्रवेशं च

சந்த்ர தசையில் புதனுடைய அந்தராந்தரபுக்தி மீ 2, நாள் 12, நாழி 15

फलम् —

द्विजन्मनि परत्वं च स्त्रीपुत्रक्षेत्रसंपदम् ।
मणिमौक्तिकवासश्च चन्द्रस्यान्तर्गते बुधे ॥ १२९

சந்த்ரதசையில் புதனுடைய ஸூக்ஷ்மபுக்தி தினம் 3, நாழி 30

तत्फलम् —

राजमान्यं वस्तुलाभो[1] विद्वेषाद्वस्तुदायकः ।
पुत्रपौत्रसमृद्धिश्च[2] शशिसूक्ष्मगते बुधे ॥ १३०

சந்த்ரதசையில் புதனுடைய ப்ராணபுக்தி நாழி 17, விநா 42

फलम् —

चामरच्छत्रसंयुक्तो[3] राज्यलाभश्च[4] वैभवम् ।
समत्वं सर्वभूतेषु चन्द्रप्राणगते बुधे ॥ १३१

சந்த்ரதசையில் கேதுவினுடைய புக்தி மீ 7

तत्फलम् —

गोनाशो देहपीडा[5] च कुक्षिरोगसमन्विता[6] ।
अज्ञाने द्रव्यनाशं च स्त्रीरोगं वापि निर्दिशेत् ॥ १३२
मात्ररिष्टं[7] पित्ररिष्टं[8] भ्रात्ररिष्टं[9] तथैव च ।
हानिश्च बुद्धिहानिश्च चन्द्रस्यान्तर्गते ध्वजे ॥ १३३

ग्रन्थान्तरे—

चन्द्रस्यान्तर्गते केतौ केन्द्रलाभत्रिकोणगे ।
दुश्चिक्ये बलसंयुक्ते धनलाभं महत्सुखम् ॥ १३४
पुत्रदारादिसौख्यं च कर्मविघ्नं करोति च ।
षष्ठाष्टमव्यये केतौ पापयुक्तेऽथ वीक्षिते ॥ १३५
यत्नकार्यार्थहानिः स्याच्चतुष्पाज्जीवनाशनम् ।
वायव्यां पश्चिमे भागे राज्ञामन्योन्ययुद्धकृत् ॥ १३६

---

1. वस्तुलाभं
2. समृद्धि च
3. संयुक्तं
4. लाभं च
5. देहपीडां
6. समन्वितम्
7. मात्रारिष्टं
8. पित्रारिष्टं
9. भ्रात्रारिष्टं

रन्ध्रस्थानयुते दृष्टे देहपीडा भविष्यति ।
निगलं स्थानहानिः स्याद्विषभीतिर्महद्भयम् ॥ १३७

वृश्चिकादिद्वितीये च नृपचोराग्निपीडनम् ।
दायेशात्केन्द्रकोणेषु दुश्चिक्ये लाभगेऽपि वा ॥ १३८

पुण्यतीर्थफलप्राप्तिर्देव[1]ब्राह्मणदर्शनम् ।
द्वितीयद्यूनराशिस्थे देहबाधापमृत्युकृत् ॥ १३९

छागदानं प्रकुर्वीत देहारोग्यं महत्सुखम् ।

சந்த்ரதசையில் கேதுவினுடைய அந்தராந்தரபுக்தி தினம் 12, நாழி 15

फलम् —

भूतावेशस्सर्पभीतिः स्त्रीपुत्रादिवियोगता ।
वशीकारश्च[2] शक्तिश्च चन्द्रस्यान्तर्गते ध्वजे ॥ १४०

சந்த்ரதசையில் கேதுவினுடைய ஸூக்ஷ்மபுக்தி தினம் 1, நாழி 25

फलम् —

आत्मनो मृत्युरुत्पन्नः शस्त्रशृङ्गविषादिभिः ।
अग्निभीतिरहिर्भीती राशिसूक्ष्मगते[3] ध्वजे ॥ १४१

சந்த்ரதசையில் கேதுவினுடைய ப்ராணபுக்தி நாழி 17

फलम् —

शस्त्राग्निरिपुबाधा च विषार्तिः कुक्षिरोगता ।
पुत्रदारवियोगश्च चन्द्रप्राणगते ध्वजे ॥ १४२

சந்த்ரதசையில் சுக்ரபுக்தி (ஹ) 1, (மீ) 8

तत्फलम्—

चन्द्रदशायां शुक्रे प्रवर्तिते[4] स्त्रीधनानि सिध्यन्ति ।
जलकृषिपशुसिद्धिः प्रयोगतोऽर्थागमः सुखं लभते ॥ १४३

सुतामित्रैः पितृसौख्यं मातृवञ्चनमादिशेत्[5] ।
ज्ञातिवर्गाद्धनप्राप्ति[6] कुलकर्म समादिशेत् ॥ १४४

---

1. प्राप्ति देव
2. वशीकरं च
3. शशिस्सूक्ष्मगते
4. प्रवर्तते
5. मातृवञ्चनं समादिशेत्
6. प्राप्तिः

मतान्तरेण—

कल्याणसिद्धिदोषं च पुत्रपौत्रादिसंभवः ।
विवाहो[1] व्ययबाहुल्यं चन्द्रस्यान्तर्गते भृगौ ॥ १४५

ग्रन्थान्तरे—

चन्द्रस्यान्तर्गते शुक्रे स्वोच्चस्वक्षेत्रकोणगे ।
त्रिकोणलाभगे चैव राज्यलाभो[2] महत्सुखम् ॥ १४६
देवब्राह्मणपूजा च बन्धु[3]सङ्कीर्णमन्दिरम् ।
इष्टदेवप्रसादेन पुत्रोत्पत्तिकरं शुभम् ॥ १४७
शुभशोभनकार्याणि गृहे लक्ष्मीकटाक्षकृत् ।
राजाश्रितधनं भूमिरश्वा[4]न्दोल्यादिसंपदम् ॥ १४८
महाराजप्रसादेन इष्टसिद्धिसुखाधिकम् ।
षष्ठाष्टमव्यये शुक्रे नीचे वास्तं गते सति ॥ १४९
पापकर्मसमायुक्तो स्थानभ्रंशो मनोव्यथा ।
अकस्मात्कलहश्चैव[5] गृहक्षेत्रादिनाशनम् ॥ १५०
दायेशात्केन्द्रकोणस्थे दुश्चिक्ये लाभगेऽपि वा ।
भोजनाम्बरपश्वादिमहोत्साहं करोति च ॥ १५१
भ्रात्रादीनां च सौख्यं च पुण्यश्रवणकीर्तनम् ।
गृहे शुभकरं चैव धैर्यविद्यार्थसंपदम् ॥ १५२
राजप्रसादकीर्तिश्च[6] जायते विविधं सुखम् ।
यज्ञकर्म विवाहश्च गीतवाद्यादिघोषणम् ॥ १५३
दायेशाद्रिपुरन्ध्रस्थे व्यये वा बलवर्जिते ।
करोति कुत्सितान्नं च विदेशगमनं तथा ॥ १५४
भुक्त्यादौ शोभनं प्रोक्तमन्ते[7] क्लेशकरं भवेत् ।
उत्तरे पूर्वदिग्भागे यात्रास्वल्पफलं लभेत् ॥ १५५
द्वितीयद्यूननाथश्चेदपमृत्युर्भविष्यति ।
तद्दोषपरिहारार्थं शिवसाहस्रनामकम् ॥ १५६
रजतप्रतिमादानं देहारोग्यं शुभावहम् ।

---

1. विवाहं
2. लाभं
3. बन्ध
4. भूमिरश्वा
5. कलहं चैव
6. कीर्तिं च
7. प्रोक्तमन्त्ये

சந்த்ரதசையில் சுக்ரனுடைய அந்தராந்தரபுக்தி மீ 1, தினம் 20

फलम् —

प्रवालमौक्तिकमणिर्दिव्या[1]भरणभूषितः[2] ।
ज्ञानसिद्धिर्महत्त्वं[3] च चन्द्रस्यान्तर्गते भृगौ ॥ १५७

சந்த்ரதசையில் சுக்ரனுடைய ஸூக்ஷ்மபுக்தி தினம் 4, நாழி 10

फलम् —

विवाहो[4] भूमिलाभश्च[5] वस्त्राभरणवैभवम् ।
राज्यलाभश्च[6] शक्तिं च शशिसूक्ष्मगते भृगौ ॥ १५८

சந்த்ரதசையில் சுக்ரனுடைய ப்ராணபுக்தி நாழி 20, விநா 50

फलम् —

सुतदारभ्रातृनाशो विदेशाच्च धनागमः ।
सुखोदयः पुण्यपतिश्चन्द्रप्राणगते भृगौ ॥ १५९

சந்த்ரதசையில் ஸூர்யபுக்தி மீ 6

फलम् —

चन्द्रदशायां भानोर्दशान्तराले त्रिदेश[7]कर्मरतः ।
कुजनस्त्रियाभिलाषी क्षीणधनो बहुबन्धुकलहः स्यात् ॥ १६०
ज्वरोष्णादिमहापीडा नेत्ररोगस्तथा[8]गसः ।
कलहो[9] मित्रबन्धूनां चन्द्रस्यान्तर्गते रवौ ॥ १६१

ग्रन्थान्तरे—

चन्द्रस्यान्तर्गते सूर्ये स्वोच्चस्वक्षेत्रसंयुते ।
केन्द्रत्रिकोणलाभे वा धने वा सोदरे बले ॥ १६२
सर्वेशश्च धनप्राप्तिर्गृहे कल्याणसंभ्रमः[10] ।
मित्रराजप्रसादेन ग्रामभूम्यादिलाभकृत् ॥ १६३
गर्भाधानफलप्राप्तिर्गृहे लक्ष्मीकटाक्षकृत् ।
भुक्त्यन्ते देह आलस्यं[11] ज्वरपीडा भविष्यति ॥ १६४

---

1. मणिं दिव्या
2. भूषितम्
3. सिद्धिं महत्त्वं
4. विवाहं
5. लाभं च
6. लाभं च
7. आदश
8. रोगं तथा
9. कलहं
10. संभ्रमम्
11. देहमालस्यं

दायेशाद्रिष्फरन्ध्रस्थे व्यये पापसमन्विते ।
नृपचोराग्निभीतिश्च ज्वररोगादिसंभव:[1] ॥ १६५

गुल्मक्षयादिरोगश्च ज्वरातिसारपीडनम् ।
विदेशगमनं चार्तिं लभते पादविभ्रमम् ॥ १६६

द्वितीयद्यूननाथे तु ज्वरपीडा भविष्यति ।
तद्दोषपरिहारार्थं शिवपूजां तु कारयेत् ॥ १६७

சந்த்ரதசையில் ரவியினுடைய அந்தராந்தரபுக்தி தினம் 5

फलम् —

जडत्वं मानहानिः स्याद्राजकोपो[2] धनक्षयः[3] ।
कार्यहानिः प्रवासश्च चन्द्रस्यान्तर्गते रवौ ॥ १६८

சந்த்ரதசையில் ரவியினுடையஸூக்ஷ்மபுக்தி தினம் 1, நாழி 15

तत्फलम् —

देशत्यागो धान्यनाशः कार्यनाशो[4] धनक्षयः ।
गोत्रवैषम्यभूमिः स्याच्छशिसूक्ष्मगते[5] रवौ ॥ १६९

சந்த்ரதசையில் ரவியினுடைய ப்ராணபுக்தி நாழிகை 5

तत्फलम्—

तीव्ररोगप्ररोषी च प्राणहानिर्मतोऽन्यथा ।
देशत्यागो नृपाद्भीतिश्चन्द्रप्राणगते रवौ ॥ १७०

## भौमदशाफलम्

### अवतारिका

कुजमहादशा प्रोच्यते—

सूर्यस्य षट्कपूर्वस्था ये ग्रहास्तेऽप्यधोमुखाः ।
अपरस्याश्च ये भानोरूर्ध्वाः स्युस्ते[6] सुखप्रदाः ॥ १

वक्रियादवरोही स्यादारोहीत्यनुवक्रतः ।
वक्रस्वोच्चफलं तुल्यं दशा तस्य तु मध्यमा ॥ २

वक्रानुवक्रमालोच्य दशाफलमुदीरयेत् ।
ताराणामेव सर्वेषामेवं ज्ञात्वा विचक्षणः ॥ ३

---

1. संभवम्
2. कोपं
3. क्षयम्
4. नाश
5. शशीसूक्ष्मगते
6. स्यास्ते

भौमदशाफलम्—

भौमस्य स्वदशाफलानि हुतभुग्भूपाहवाद्यैर्धनं
भैषज्योऽनृतवञ्चनैश्च विविधैः क्रौर्यैर्धनस्यागमः ।
पित्तासृग्ज्वरबाधिताश्च सततं नीचाङ्गनासेवनं
विद्वेषी गुरुबन्धुदारतनुजैः[1] काष्ठान्यभाग्यै रतः ॥ ४

मूलत्रिकोणसंस्थस्य[2] भौमस्य दशा[3] धनाधिकं जनयेत् ।
सुतदारधनप्राप्तिस्साहसकारी[4] रतिप्रियो धीमान् ॥ ५

ग्रन्थान्तरे—

परमोच्चगते भौमे स्वोच्चमूलत्रिकोणगे ।
स्वर्क्षकेन्द्रत्रिकोणे वा लाभे वा धनगेऽपि वा ॥ ६
संपूर्णबलसंयुक्ते शुभदृष्टे शुभांशके ।
राज्यलाभो[5] भूमिलाभो[6] धनधान्यादिलाभकृत् ॥ ७
आधिक्यं भूरिसंमानं वाहनाम्बरभूषणम् ।
विदेशस्थानलाभश्च[7] सोदराणां सुखं भवेत् ॥ ८
केन्द्रे गते यथा भौमे दुश्चिक्ये बलसंयुते ।
पराक्रमाद्वित्तलाभो[8] युद्धे शत्रुजयो[9] भवेत् ॥ ९
कलत्रपुत्रविभवं नृपसंमानमेव च ।
दशादौ सुखमाप्नोति दशान्ते कष्टमादिशेत् ॥ १०
मेषाश्रितभौमदशायां प्रवर्तते[10] ख्यातिमान् महोत्साही ।
पित्ताग्निचोरबाधा बह्वायासेन सन्तप्तः ॥ ११
वृषभे भौमदशायां प्राप्यस्त्रीहीनरोगक्लेशसन्तप्तः ।
वाग्व्यसनी[11] नातिसुतः[12] परवित्तरतो[13] न देवगुरुभक्तः ॥ १२
मिथुने भौमदशायां विदेशवासी कलाविधिज्ञश्च ।
स्वजनायासविरोधी बहुव्ययार्तोऽनिलाग्निसन्तप्तः ॥ १३

---

1. सुताभिः
2. संस्थितस्य
3. इदं पदं मूले नास्ति
4. करी
5. लाभं
6. लाभं
7. लाभं च
8. लाभं
9. जयं
10. वर्तते
11. वाश्वसनी
12. सुता
13. परवत्तरतो

भौमदशायां शशिभे तोयोद्यानाग्निवित्तवान् स्वगुणैः ।
दारसुतबन्धुहीनो विकलाङ्गो लोकविक्लिष्टः[1] ॥ १४
नीचादूर्ध्वदशायां भौमस्य गुणातिरिक्त[2]विख्यातः ।
बलवान् प्रधानवैरी हृद्रोगार्तो[3] गवादिसंपन्नः ॥ १५
सिंहाश्रितभौमदशा कुरुते जननायकं महोत्साहम् ।
सुतदारवित्तहीनं शस्त्राग्निनिपीडितं[4] जनयेत् ॥ १६
कन्याश्रितभौमदशा प्राप्यस्थानं धनं सुखं लभते ।
यज्ञक्रियासु निपुणं विषमाक्षं भूमिदारपुत्रार्तिम् ॥ १७
तौल्यां भौम[5]दशायामरुचिस्त्रीजनकृतार्थ[6]परहीनः ।
परजनकलहोद्युक्तो गजाश्वहीनोऽङ्गहीनो वा ॥ १८
अळिनि तु भौम[7]दशायां प्रवर्तते सर्वजनवन्द्येशः ।
कृषिधान्यधनावाप्तिः सुहृदां द्वेषी विषाग्निशस्त्रहतः ॥ १९
चापे भौमदशायां द्विजदेवनृपादिवर्धनं[8] लभते ।
दुस्साध्यकर्मकर्तृककलहप्रियो नातिमान्यश्च[9] ॥ २०
भौमस्योच्च[10]दशायां सुखवाहराज्यसंपन्नः ।
अनिवारितरणवेगः प्रधानजनबन्धुमान् भवति ॥ २१
उच्चात्क्रान्तदशा मकरे भौमस्य यत्नतोऽर्थाप्तिः ।
व्याळ[11]मृगोरगशस्त्रैः पीडां कुरुतेऽसन्तुष्टिः ॥ २२
कुम्भे भौमदशायामाचारवर्जितोऽतिमानी[12] स्यात् ।
दारिद्र्यदुर्गतप्तो दुर्मार्गस्थो विनष्टतनयश्च ॥ २३
मत्स्यदशायां रूढे रागी विगतात्मजो व्ययार्तः स्यात् ।
ऋणवान् विदेशवासी वृश्चिकवाद्यै[13]र्व्रणैश्च परितप्तः ॥ २४
वर्गोत्तममत्स्यदशा राशिषु भौमस्य लोकविख्यातः ।
तत्प्रोक्तभावाद्विगुणं[14] लभते संग्रामविश्रुतो बलवान् ॥ २५

---

1. विक्लृष्टः
2. गुणयिरेक
3. गुह्यरोगार्तो
4. शस्त्राग्निपीडितं
5. तौलिभौम
6. अरुचिस्त्रीकृतार्थ
7. अलिनिभौम
8. नृपाविवर्धनं
9. कर्तृकलहप्रियोऽतिमान्यश्च
10. भौमश्चोच्च
11. व्यळ
12. वर्जितोऽप्यतिमानी
13. वृश्चिकाद्यै
14. भावाद्विगुणं

नीचांशस्थदशायां[1] भौमस्य सदाटनं मनोदुःखम् ।
फलसन्निकर्षनाशं श्रेष्ठं त्यक्त्वाधमं भजते ॥ २६

भौमस्यास्तमयदशा सर्वोपद्रवकारिणी विनाशमृतिः ।
कर्मायोदयराशिषु[2] राशिप्रोक्तानि फलानि सिध्यन्ति ॥ २७

भौमस्याष्टमकदशा[3] शत्रुविरोधान्मृतिं विवादं च[4] ।
जनयति सर्वविघ्नं बन्धुर्निमित्तः[5] स्वमानहानिः स्यात् ॥ २८

ऊर्ध्वास्यतुङ्गभुवनास्थितभूमिजस्य
कर्मायगस्य विदधाति महत्सुराज्यम्[6] ।
जित्वा रिपुं निखिलवाहनसैन्ययुक्तो
राज्यश्रियं वितनुते निधिकृन्न दाता ॥ २९

குஜதசையில் குஜபுக்தி மீ 4, தினம் 27

तत्फलम्—मतान्तरेण

ज्वरस्फोटव्रणं चैव भूतावेशः क्वचिद्भयम् ।
अग्निराजभयं मृत्युर्भौम[7]स्यान्तर्दशा फलम् ॥ ३०

अपस्मारक्षयः[8] कुष्ठं रक्तस्रावो[9] महद्भयम् ।
चोरराजभयं मृत्युर्भौमस्यान्तर्दशाफलम् ॥ ३१

ग्रन्थान्तरे—

कुजस्यान्तर्गते भौमे लग्नात्केन्द्रत्रिकोणगे ।
लाभे वा धनसंयुक्ते दुश्चिक्ये बलसंयुते ॥ ३२

लग्नाधिपेन संयुक्ते राजानुग्रहशान्तिकम् ।
लक्ष्मीकटाक्षचिह्नानि नष्टराज्यार्थलाभकृत् ॥ ३३

पुत्रोत्सवादिसन्तोषो[10] गृहे गोक्षीरसंकुलम् ।
स्वोच्चे वा स्वर्क्षगे भौमे स्वांशे वा बलसंयुते ॥ ३४

गृहक्षेत्राभिवृद्धिश्च गोमहिष्यादिवृद्धिकृत् ।
महाराजप्रसादेन इष्टसिद्धिसुखावहम् ॥ ३५

षष्ठाष्टमव्यये भौमे पापयुक्तेऽथ वीक्षिते ।
मूत्रकृच्छ्रशिरोरोगमुष्णाधिक्यं महद्भयम् ॥ ३६

---

1. नीचांशस्थितदश
2. कर्मायोदशराशिषु
3. भौमस्याष्टमदश
4. च नास्ति
5. निमित्ता
6. महस्सुराज्यम्
7. मृत्युभौम
8. क्षयं
9. स्रावं
10. सन्तोषं

चोरोपद्रवपीडा च धनधान्यपशुक्षयः ।
कुटुम्बन्यूननाथे तु देहजाड्यं मनोरुजम् ॥　　३७
तद्दोषपरिहारार्थं सुब्रह्मण्यजपं चरेत् ।
अनड्वाहं प्रकुर्वीत देहारोग्यं सुखं भवेत् ॥　　३८
कुजप्रीतिकरं चैव सर्वसंपत्प्रदायकम् ।

குஜதசையில் குஜனுடைய அந்தராந்தரபுக்தி தினம் 8, நாழி 34

फलम्—

बन्धुनाशो[1] महान् क्लेशो[2] दारनाशो[3] रिपोर्भयम् ।
परदारपरिग्राहोऽप्यन्तरान्तर्गते कुजे ॥　　३९

குஜதசையில் குஜனுடைய ஸூக்ஷ்மபுக்தி நாழி 29, விநாடி 25

फलम्—

भूमिनाशो मनस्तापोऽप्यपस्मारश्च[4] बन्धनम् ।
परक्षोभान्मनस्तापो भौमसूक्ष्म[5]दशाफलम् ॥　　४०

குஜதசையில் குஜனுடைய ப்ராணபுக்தி நாழி 1, விநாடி 43

फलम्—

सर्पेण रज्जुना बाधा शस्त्रेण पतनेन वा ।
मृत्युना मरणं यान्ति भौमप्राणदशाफलम् ॥　　४१

குஜதசையில் ராஹுபுக்தி வருஷம் 1, மாதம் 0, நாள் 18

तत्फलम्—

भौम[6]दशायां राहोरन्तरकाले प्रवर्तते तस्मिन् ।
बन्धुवर्गे प्रमादश्च[7] दूरात्संशोकपीडनम् ॥　　४२
स्त्रीद्वेष्यं कर्षकत्वं च चतुष्कर्म समादिशेत् ।
राजक्षोभं नृपाद्भीतिं[8] कलहं च महद्भयम् ॥　　४३
त्वग्दोषैर्देहपीडा[9] च भौमस्यान्तर्गतेऽप्यहौ ।

ग्रन्थान्तरे—

कुजस्यान्तर्गते राहौ स्वोच्चमूलत्रिकोणगे ।
शुभयुक्ते शुभे दृष्टे[10] केन्द्रलाभत्रिकोणगे ॥　　४४

---

1. नाशं
2. महत् क्लेशं
3. दारनाशं
4. मनस्तापमपस्मारश्च
5. क्षोभादतिस्तापो भौमस्सूक्ष्म
6. कुज
7. प्रमादं च
8. भीतिः
9. पीड
10. द्रष्टे

तद्भुक्त्या राजसंमानं ग्रामभूम्यादिलाभकृत् ।
कलत्रपुत्रलाभः स्याद्व्यवसायात्फलाधिकम् ॥ ४५

सेतुस्नानफलं पुण्यं विदेशगमनं तथा ।
षष्ठाष्टमव्यये राहौ पापयुक्तेऽथ वा यदि ॥ ४६

चोरादिरणभीतिश्च चतुष्पाज्जीवनाशनम् ।
वातपित्तक्षयश्चैव[1] कारागृहनिवेशनम् ॥ ४७

धनस्थानगते राहौ धननाशो[2] महद्भयम् ।
वाक्पारुष्यं मनोदुःखं कुत्सितान्नं शिरोरुजम् ॥ ४८

द्वितीयसप्तमे वापि अपमृत्युभयं भवेत् ।
काकदानं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ ४९

குஜதசையில் ராஹுவினுடைய அந்தராந்தரபுக்தி மீ 1, தினம் 26, நாழி 42

फलम्—

क्षुद्रोपद्रवदोषाश्च धनधान्यविनाशनम् ।
चतुष्पात्पीडनं चैव कुजस्यान्तर्गतेऽप्यहौ ॥ ५०

குஜதசையில் ராஹுவினுடைய ஸூக்ஷ்மபுக்தி தினம் 1, நாழி 15

फलम्—

अङ्गभेदोऽङ्गनाभीतिः प्रमादाद्वित्तनाशनम् ।
अग्निभीतिविषार्तिश्च भौमसूक्ष्म[3]गतेऽप्यहौ ॥ ५१

குஜதசையில் ராஹுவினுடைய ப்ராணபுக்தி நாழி 4, விநாடி 24, கலை 54

तत्फलम्—

विच्युतिः पदमानानि बन्धूपद्रवपीडनम् ।
विषोत्पत्तिर्विषेणापि भौमप्राणगतेऽप्यहौ ॥ ५२

குஜதசையில் குருவினுடைய புக்தி மீ 11, தினம் 6

तत्फलम्—

जीवापहारे भौमाच्च कुलाधिको ज्ञानवान्नरेन्द्रधनः ।
दारसुतबन्धुमान्यो भोगगुणयुक्तश्च धर्मनिरतश्च ॥ ५३

विप्रवर्गाद्धनप्राप्तिं क्षेत्रलाभं निरामयम् ।
सत्पूजनं महाबुद्धिमज्ञाने विजयो[4] भवेत् ॥ ५४

---

1. क्षयं चैव
2. नाशं
3. भौमस्सूक्ष्म
4. विजयं

धनधान्यसमृद्धिश्च दासीदासविवर्धनम् ।
औपासनादिसौख्यं स्याद्भौमस्यान्तर्गते गुरौ ॥ ५५

ग्रन्थान्तरे—

कुजस्यान्तर्गते जीवे त्रिकोणे केन्द्रगेऽपि वा ।
धने वा लाभसंयुक्ते तुङ्गांशे स्वांशकेऽपि वा ॥ ५६
सत्कीर्ति राजसंमानं धनधान्यं महोत्सवम् ।
महाराजप्रसादेन इष्टकार्यार्थसिद्धिकृत् ॥ ५७
मित्रप्रभुवशादिष्टं छत्रचाम[1]रवैभवम् ।
स्वोच्चस्वक्षेत्रगे जीवे शुभदृष्टिसमन्विते ॥ ५८
शुभवर्गगते जीवे वाहनाम्बरभूषणम् ।
चतुष्पाज्जीवलाभस्स्याद्व्यवसायात्फलाधिकम् ॥ ५९
गृहे कल्याणसंपत्तिर्दारपुत्रादिवर्धनम् ।
दशाधिपेन संयुक्ते कृषिगोधनसंपदः ॥ ६०
राजसँल्लापकार्याणि नूतनप्रभुदर्शनम् ।
चतुष्पाज्जीवलाभः[2] स्यात् पुण्यतीर्थप्रवासकम् ॥ ६१
महाराजप्रसादेन वाहनाम्बरभूषणम् ।
देहसौख्यं महोत्साहो[3] गृहे लक्ष्मीकटाक्षकृत् ॥ ६२
वस्त्राभरणलाभः स्यादिष्टसिद्धिसुखाधिकम् ।
षष्ठाष्टमव्यये जीवे नीचे वास्तं गते सति[4] ॥ ६३
पापग्रहेण संयुक्ते शुभांशे शुभवर्गगे ।
गृहक्षेत्रादिवृद्धिश्च गृहे कल्याणसंपदः[5] ॥ ६४
देहसौख्यं सुखं कीर्तिर्गृहे गोधनसंकुलम् ।
कलत्रपुत्रविभवो[6] राजसंमानसंभ्रमः[7] ॥ ६५
द्वितीयद्यूननाथे वा अपमृत्युर्ज्वरादिकम् ।
तद्दोषपरिहारार्थं शिवसाहस्रकं जपेत् ।
[8]सुवर्णप्रतिमादानं सर्वसंपत्प्रदायकम् ॥ ६६

---

1. चापर
2. लाभं
3. महोत्साहं
4. यदि
5. संपदम्
6. विभवं
7. संभ्रमम्
8. स्वर्ण

குஜதசையில் குருவினுடைய அந்தராந்தரபுக்தி மீ 1, தினம் 14, நாழி 48

फलम्—

प्रभुत्वं स्थिरबुद्धिश्च[1] राजसेवारतस्सदा ।
साधनं सर्वसंपत्तिः कुजस्यान्तर्गते गुरौ ॥ ६७

குஜதசையில் குருவினுடைய ஸூக்ஷ்மபுக்தி தினம் 1, நாழி 7, விநாடி 16

तत्फलम्—

देवपूजारतिश्चैव[2] मतानुष्ठानतत्परः[3] ।
लोकपूज्यैश्च मित्रैश्च भौमसूक्ष्मगते गुरौ ॥ ६८

குஜதசையில் குருவினுடைய ப்ராணபுக்தி நாழி 3, விநாடி 55, கலை 28

फलम्—

देवार्चनरतः श्रीमान् मन्त्रानुष्ठानतत्परः ।
पुत्रपौत्रसुखावाप्तिर्भौमप्राणगते गुरौ ॥ ६९

குஜதசையில் சனிபுக்தி வரு 1, மீ 1, தினம் 9

तत्फलम्—

मन्दापहारे भौमाच्च क्लेशाक्लेशं समाप्नुयात् ।
[4]दारसुतबन्धुहीनः स्थानभ्रंशो मृतिर्वाऽपि ॥ ७०
रोदनं शत्रुपीडा[5] च बन्धुनाशो[6] धनक्षयः[7] ।
व्याधिपीडा रिपुक्लेशो भौमस्यान्तर्गते शनौ ॥ ७१

ग्रन्थान्तरे—

कुजस्यान्तर्गते मन्दे स्वोच्चस्वक्षेत्रकेन्द्रगे ।
त्रिकोणलाभदुश्चिक्ये भाग्यकर्माधिपैर्युते ॥ ७२
लग्ने लाभेशसंबन्धे मित्रवर्गे शुभांशके ।
[8]राज्ञः सुखं महाकीर्ति[9] स्वग्रामे धान्यलाभकृत् ॥ ७३
पुत्रपौत्रसमायुक्ते गृहे लक्ष्मीकटाक्षकृत् ।
स्ववारे राजसंमानं स्वकांशे तु फलाधिकम् ॥ ७४

---

1. बुद्धिं च
2. रतिं चैव
3. तत्परम्
4. इतः प्राक् सततं इति वर्तते
5. पीड
6. नाशं
7. क्षयम्
8. राज्ञात्सुखं
9. महत्कीर्ति

नीचारिक्षेत्रगे मन्दे षष्ठाष्टव्ययगेऽपि वा ।
म्लेच्छवर्गप्रसंगश्च देहपीडा धनक्षयः[1] ॥ ७५
चोराग्निनृपभीतिश्च अन्यक्षेत्राभिवृद्धिकृत् ।
बन्धुद्वेषो[2] मनोदुःखं मूत्रकृच्छ्रं महद्भयम् ॥ ७६
क्षयापस्मारपीडादि स्फोटकाद्भयमीदृशम् ।
वातपित्तादिरोगश्च[3] शत्रुभीतिर्महद्भयम्[4] ॥ ७७
द्वितीयद्यूननाथे तु अपमृत्युभयं भवेत् ।
तद्दोषपरिहारार्थं मृत्युञ्जयजपं चरेत् ॥ ७८
कृष्णां गां महिषीं दद्याद्विष्णुमाहस्रकं जपेत् ।
आरुणोक्तेन मन्त्रेण प्रणामं कारयेज्जपेत् ॥ ७९

குஜதசையில் சனியினுடைய அந்தராந்தரபுக்தி மீ 2,
தினம் 3, நாழி 10

तत्फलम्—

शूद्राङ्गनाविरोधश्च[5] देशत्यागो धनक्षयः ।
रोदनं निगलप्राप्तिर्भौमस्यान्तर्गते शनौ ॥ ८०

குஜதசையில் சனியினுடைய ஸூக்ஷ்மபுக்தி நாழி 19, வினாடி 52

तत्फलम्—

बन्धनान्मुच्यते बन्धो धनधान्यप्रजाक्षयः ।
भृत्यदारविनाशश्च भौमसूक्ष्मगते[6] शनौ ॥ ८१

குஜதசையில் சனியினுடைய ப்ராணபுக்தி நாழி 4,
வினாடி 3), கலை 36

तत्फलम्—

अग्निबाधा भवेन्मृत्युरर्थनाशः[7] पदच्युतिः ।
बन्धुभिर्बन्धनावाप्ति[8]र्भौमप्राणगते शनौ ॥ ८२

குஜதசையில் புதனுடைய புக்தி மீ 11, தினம் 27

फलम्—

भौमदशायां सौम्ये प्रविशति रिपुरोगपीडितो मनुजः ।
सन्नोत्साही नृपतेः परायणं पुत्रदारमहितः स्यात् ॥ ८३

1. क्षयम्
2. द्वेषं
3. रोगं च
4. भीतिं महद्भयम्
5. विरोधं च
6. भौमस्सूक्ष्मगते
7. नाशं
8. बन्धनाव्याप्ति

देहे पङ्कजलाब्याधिं नेत्रे तु मलिनं तथा ।
वैश्यवर्गाद्धनप्राप्तिं[1] क्षेत्रे वा धान्यमादिशेत् ॥ ८४

द्रव्यार्जने कुशलको लोकानुग्राहकाशयः[2] ।
पुत्रदारार्थसंपत्तिर्भौमस्यान्तर्गते बुधे ॥ ८५

ग्रन्थान्तरे—

कुजस्यान्तर्गते सौम्ये लग्नात्केन्द्रत्रिकोणगे ।
स्वोच्चस्वक्षेत्रगे वापि तुङ्गांशे स्वांशकेऽपि वा ॥ ८६

सत्कथाश्रवणं दानं धर्मबुद्धिर्महत्[3]सुखम् ।
नीतिमार्गप्रसङ्गश्च नित्यं मृष्टान्नभोजनम् ॥ ८७

पुत्रोत्सवादिसन्तोषो[4] वाहनाम्बरभूषणम् ।
रत्नलाभश्च[5] सौभाग्यं व्यापारेण धनागमः[6] ॥ ८८

शिवपूजा विष्णुपूजा ज्ञानवृद्धिस्सुखाधिकम् ।
क्रतुकर्मफलं सिद्धिरन्नदानं[7] महत्सुखम् ॥ ८९

षष्ठाष्टमव्यये सौम्ये नीचे वास्तं गते सति[8] ।
हृद्रोगो[9] मानहानिश्च निगलं बन्धुनाशनम् ॥ ९०

दारपुत्रादिपीडा स्याद्दुश्चिक्ये लाभगेऽपि वा ।
धने वा सौम्ययुक्ते वा[10] योगकारकसंयुते ॥ ९१

राजसंमानकीर्तिश्च[11] नानारत्नादिलाभकृत् ।
भूपालयोगं कुरुते यानाम्बरविभूषणम् ॥ ९२

भेरीमृदङ्गवाद्यं च सेनापत्यं महत्सुखम् ।
विद्याविनोदसत्कीर्तिर्गृहे लक्ष्मीकटाक्षकृत् ॥ ९३

दायेशात् षष्ठराशिस्थे[12] रन्ध्रे वा व्ययगेऽपि वा ।
तद्दोषो[13] मानहानिः स्यात् क्रूरवत्क्रूरबुद्धिदः[14] ॥ ९४

---

1. प्राप्तिः
2. ग्रहकायशाः
3. बुद्धि महत्
4. सन्तोषं
5. लाभं च
6. धनागमम्
7. सिद्धिमन्नदानं
8. यदि
9. हृद्रोगं
10. वा इति नास्ति
11. कीतिश्च
12. दायेशाष्षष्ठ
13. तद्दोषं
14. बुद्धिदम्

हीनजातिविरोधश्च कर्मविघ्नो[1] महद्भयम् ।
सप्तमद्यूननाथे तु अपमृत्युभयं भवेत् ॥ ९५
अश्वदानं प्रकुर्वीत विष्णुसाहस्रकं जपेत् ।
बुधप्रीतिकरं चैव शान्तिं कुर्याद्विचक्षणः ।
सर्वारिष्टविनाशश्च[2] देहारोग्यं महत्सुखम् ॥ ९६

குஜதசையில் புதனுடைய அந்தராந்தரபுக்தி மீ 1,
தினம் 24 நாழி 34

तत्फलम्—
मानसो[3] नृपसत्कारो[4] बन्धूनां परितोषणम् ।
हेममौक्तिकलाभश्च[5] कुजस्यान्तर्गते बुधे ॥ ९७

குஜதசையில் புதனுடைய ஸூக்ஷ்மபுக்தி தினம் 1,
நாள் 11, விநாடி 28

तत्फलम्—
वाहनच्छत्रसंयुक्तं राजार्हं भूषणं तथा ।
कासश्वासादिनाशश्च[6] भौमसूक्ष्मगते बुधे ॥ ९८

குஜதசையில் புதனுடைய ப்ராணபுக்தி நாழி 4, விநாடி 10

तत्फलम्—
दिव्याम्बरसमुत्पत्तिर्दिव्याभरणभूषितः ।
दिव्याङ्गनाङ्गसंभोगो भौमप्राणगते बुधे ॥ ९९

குஜதசையில் கேதுபுக்தி மீ 4, தினம் 27

तत्फलम्—
उदरे व्याधिनिर्बन्धं निष्फलं भ्रातृपीडनम् ।
देहे पङ्कजलाद्व्याधिं[7] नेत्रे तु रुजमादिशेत् ॥ १००
नीचैः कलहवैरित्वं जपमार्गविदूषणम् ।
वाग्दोषोऽप्यर्थनाशश्च भौमस्यान्तर्गते ध्वजे ॥ १०१

ग्रन्थान्तरे—
कुजस्यान्तर्गते केतौ त्रिकोणे केन्द्रगेऽपि वा ।
दुश्चिक्यलाभगे वापि शुभयुक्ते शुभेक्षिते ॥ १०२

---

1. विघ्नं
2. विनाशं च
3. मानसं
4. सत्कारं
5. लाभ च
6. कासश्वादिनाशं च
7. व्याधिः

राजानुग्रहशक्तिश्च बहुसौख्यं धनागमः[1] ।
कोटस्थलं तदादौ तु भूलाभः[2] पुत्रलाभकृत् ॥ १०३

राजसंलापकार्याणि चतुष्पाज्जीवलाभकृत् ।
योगकारकसंबन्धस्थानविद्यासमन्विते ॥ १०४

पुत्रलाभो[3] यशोवृद्धिर्गृहे[4] लक्ष्मीकटाक्षकृत् ।
भृत्यवर्गधनप्राप्तिस्सेनापत्यं महत्सुखम् ॥ १०५

भूपालयोगं कुरुते यानाम्बरविभूषणम् ।
दायेशात्[5] षष्ठरिप्फे वा रन्ध्रे वा पापसंयुते ॥ १०६

कपालदन्तरोगश्च चोरव्याघ्रादिपीडनम् ।
द्वितीयसप्तमस्थाने देहबाधा भविष्यति ॥ १०७

समानशोकसन्तापो[6] धनधान्यपरिच्युतिः[7] ।
छागदानं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ १०८

குஜதசையில் கேதுவினுடைய அந்தராந்தபுக்தி தினம் 8, நாழி 24

तत्फलम् —

गोधनानि च हीयन्ते कृषिधान्यानि चैव हि ।
तद्दोषैर्देहहानिश्च भौमस्यान्तर्गते ध्वजे ॥ १०९

குஜதசையில் கேதுவினுடைய ஸூக்ஷ்மபுக்தி நாழி 29, விநாடி 5

तत्फलम्—

परप्रेरितबुद्धिश्च[8] सर्वत्र च विगर्हिता ।
अशुद्धिस्सर्वकालेषु भौमसूक्ष्मगते ध्वजे ॥ ११०

குஜதசையில் கேதுவினுடைய ப்ராணபுக்தி நாழி 1, விநாடி 43

फलम् —

पतनात्पादपीडा च नेत्रक्षोभो महद्भयम् ।
भुजङ्गे द्रव्यहानिः स्याद्भौमप्राणगते ध्वजे ॥ १११

குஜதசையில் சுக்ரபுக்தி வருஷம் 1, மாதம் 2,

तत्फलम् —

शुक्रापहारे भौमश्चेत्[9] स्वतन्त्रो रोगवान् विदेशरतः ।
स्त्रीजनवैरिकुहरो गात्रच्छेदो नरो वापि ॥ ११२

---

1. धनागमम्
2. भूलाभं
3. लाभं
4. वृद्धिं गृहे
5. दायेशा
6. सन्तापं
7. च्युतिम्
8. बुद्धिं च
9. भौमाच्चा

कलत्रं भूषणं वस्त्रं मातुलाद्धनवर्धनम् ।
अलङ्कार इहाभोगं स्त्रीगोष्ठीं च समादिशेत् ॥ ११३
गन्धादिपरिमलद्रव्यैः[1] सेवितो जनसेवितः[2] ।
त्यागभोगसमायुक्तो भौमस्यान्तर्गते भृगौ ॥ ११४

ग्रन्थान्तरे —
कुजस्यान्तर्गते शुक्रे केन्द्रलाभत्रिकोणगे ।
कोणे वा स्वोच्चराशिस्थे स्वक्षेत्रे शुभसंयुते ॥ ११५
राज्यलाभो[3] महत्सौख्यं गजाश्वाम्बरसंकुलम् ।
लग्नाधिपेन संयुक्ते दारस्त्रीपुत्रवर्धनम् ॥ ११६
आयुश्च बुद्धिरैश्वर्यं भाग्यवृद्धिस्सुखं भवेत् ।
लग्नाधिपदशाकाले लग्नाधीशस्वभुक्तिषु ॥ ११७
तत्काले श्रियमाप्नोति पौत्रलाभं महत्सुखम् ।
दानधर्ममहासौख्यं गजाश्वाम्बरसंकुलम् ॥ ११८
महाराजप्रसादेन ग्रामभूम्यादिलाभकृत् ।
भुक्त्यन्ते[4]ष्टफलप्राप्तिः[5] पुण्यश्लोकादिकीर्तनम् ॥ ११९
राजपूजा महत्सौख्यं श्वेतवस्त्राश्वलाभकृत् ।
भाग्यलाभाधिपैर्युक्ते वाहनाधिपसंयुते ॥ १२०
कर्माधिपेन सम्बद्धे[6] तद्भुक्तौ च महत्सुखम् ।
विवाहोत्सवकार्याणि गृहे लक्ष्मीकटाक्षकृत् ॥ १२१
भाग्यलाभाधिपैर्युक्ते वाहनाधिपसंयुते ।
दायेशात्केन्द्रकोणे वा दुश्चिक्ये लाभगेऽपि वा ॥ १२२
तद्भुक्त्यादौ पुण्यतीर्थस्नानं[7] दैवतदर्शनम् ।
करोति विपुलं राज्यं गन्धमाल्यादिभूषणम् ॥ १२३
दानधर्मोदयात्पुण्यं तटाकं च शुभाधिकम् ।
सेनाधिपत्ययोगेन युद्धे विजयमाप्नुयात्[8] ॥ १२४
दायेशाद्रिपुरिष्फे वा षष्ठे वा पापसंयुते ।
करोति दुःखबाहुल्यं कारागृहप्रवेशनम् ॥ १२५

---

1. एकमक्षरमधिकमस्मिन् पादे
2. जनसेवितिः
3. लाभं
4. भुक्त्यान्ते
5. भुक्त्यन्ते इष्टफलप्राप्तिः इति च्छेदः
6. संबन्धे
7. पुण्यतीर्थे स्नानं
8. विजये युद्धमाप्नुयात्

राजदण्डाक्षिरोगौ च शत्रुभीतिर्महद्भयम् ।
दारपुत्रविनाशश्च नृपचोराग्निपीडनम् ॥ १२६

द्वितीयद्यूननाथे तु देहबाधा भविष्यति ।
श्वेताङ्गां महिषीं दद्याद्दानेनारोग्यमादिशेत् । १२७
शुक्रप्रीतिकरं चैव शान्तिमाप्नोत्यसंशयम्[1] ॥

குஜதசையில் சுக்ரனுடைய அந்தராந்தரபுக்தி மீ 2,
தினம் 10

मुक्ताभरणसंप्राप्तिर्देशग्रामाधिपत्यताम् ।
कुस्त्रीभोगः[2] स्त्रिया व्याधिर्भौमस्यान्तर्गते भृगौ ॥ १२८

குஜதசையில் சுக்ரனுடைய ஸூக்ஷ்மபுக்தி தினம் 11,
நாழி 40

फलम्—

इष्टस्त्रीभोगसंपत्तिरिष्टभोजनसङ्ग्रहः ।
इष्टार्थसिद्धिलाभश्च भौमसूक्ष्मगते भृगौ ॥ १२९

குஜதசையில் சுக்ரனுடைய ப்ராணபுக்தி நாழி 4,
விநாடி 54

तत्फलम्—

अन्नादिभोजनसुखी वर्तमानो धनागमः ।
विभवे परिभोगः स्याद्भौमप्राणगते भृगौ ॥ १३०

குஜதசையில் ரவியினுடையபுக்தி மீ 4, தினம் 6

तत्फलम्—

सूर्यापहारे भौमस्य दशाचारो ज्ञानवान्नरेन्द्रधनः ।
पितृबन्धुधनैर्युक्तः कलहप्रायोऽतिमानी च ॥ १३१

अपवादं पितृद्वेषं कलहं व्याधिपीडनम् ।
कलत्रदुःखमर्थं च स्वप्नदर्शनमादिशेत् ॥ १३२

राजोपद्रवनाशश्च[3] लोके जन्तुविरोधिता[4] ।
तेजोहानिर्मनोदुःखं[5] भौमस्यान्तर्गते रवौ ॥ १३३

---

1. असंशयः
2. भोगं
3. नाशं च
4. विरोधता
5. मनोदुःखी

ग्रन्थान्तरे—

कुजस्यान्तर्गते सूर्ये स्वोच्चस्वक्षेत्र[1]केन्द्रगे ।
मूलत्रिकोणगे वापि सौख्यं राजप्रियं सुखम् ॥ १३४
राजसंमानकीर्तिश्च सञ्चारो[2] भवति ध्रुवम् ।
उष्णाधिक्यं शिरोरोगश्चतुष्पा[3]ज्जीवलाभकृत् ॥ १३५
राज्यलाभो[4] महोत्साहः[5] स्ववारे राजदर्शनम् ।
दायेशात्केन्द्रराशिस्थे त्रिकोणे लाभगेऽपि वा ॥ १३६
धनधान्यसमृद्धिश्च गृहे कल्याणसंभ्रमः[6] ।
क्षेमारोग्यं महद्धैर्यं राजपूजा महत्सुखम् ॥ १३७
व्यवसायात्फलाधिक्यं विदेशे राजदर्शनम् ।
दायेशात्[7] षष्ठरिष्फे वा व्यये वा पापसंयुते ॥ १३८
देहपीडा मनस्तापः[8] कार्यनाशो[9] महद्भयम् ।
मूत्रकृच्छ्रादिरोगश्च अतिसारस्तथापि वा[10] ॥ १३९
द्वितीयद्यूननाथे वा तापज्वरविषाद्भयम् ।
सूर्यप्रीतिकरं चैव शान्तिं कुर्याद्यथाविधि ।
देहारोग्यं महत्सौख्यं धनधान्यसमृद्धिदम् ॥ १४०

குஜதசையில் ரவியினுடைய அந்தராந்தரபுக்தி தினம் 6,
நாழி 18

तत्फलम्—

नेत्ररोगः[11] शिरोरोगः[12] कुक्षिरोगस्तथैव[13] च ।
गुह्यरोगादिकं चैव भौमस्यान्तर्गते रवौ ॥ १४१

குஜதசையில் ரவியினுடைய ஸூக்ஷ்மபுக்தி நாழி 20,
விநாடி 13

फलम्—

राजद्वेषो द्विजद्वेषः कार्याभिप्रायवञ्चकः ।
लोके दूषक एवस्याद्भौमसूक्ष्मगते[14] रवौ ॥ १४२

---

1. स्वेक्षेत्र
2. संचारं
3. रोगं चतुष्पा-
4. राज्यलाभं
5. महोत्साहं
6. संभ्रमम्
7. दायेशा
8. मनस्तापं
9. नाशं
10. अतिसारमथापि वा
11. रोगं
12. रोगं
13. रोगं तथैव
14. भौमस्सूक्ष्मगते

குஜதசையில் ரவியினுடைய ப்ராணபுக்தி நாழி 1, விநாடி 28

तत्फलम्

ज्वरोन्मादक्षयश्चैव[1] राजविद्वेषसंभवः[2] ।
दीर्घरोगी दरिद्रश्च भौमप्राणगते रवौ ॥ १४३

குஜதசையில் சந்த்ரபுக்தி மீ 7

तत्फलम्—

चन्द्रापहारे भौमाब्द पित्तश्लेष्मादिको महोत्साही ।
बहुजनविरहशीलो बहुप्रकारोपजीवनं कुरुते ॥ १४४
मातृवर्गाद्धनप्राप्तिं कामपीडनमादिशेत् ।
पितृमातृधनच्छेदं निद्रालस्यसमन्वितम् ॥ १४५
शयनं रत्नभूषा च वेश्यास्त्रीपरिसेवनम् ।
जलयानाद्धनावाप्ति[3]र्भौमस्यान्तर्गते विधौ ॥ १४६

ग्रन्थान्तरे—

कुजस्यान्तर्गते चन्द्रे स्वोच्चस्वक्षेत्रकेन्द्रगे ।
दारभाग्याधिपैर्युक्तो वाहनेशयुतोऽथवा ॥ १४७
करोति विपुलं राज्यं गन्धमाल्यविभूषणम् ।
तटाकगोपुरादीनि पुण्यकर्मादिसङ्ग्रहम् ॥ १४८
विवाहोत्सवकार्याणि दारपुत्रादिसौख्यताम् ।
पितृमातृसुखावाप्तिर्गृहे लक्ष्मीकटाक्षकृत् ॥ १४९
महाराजप्रसादेन इष्टसिद्धिः[4] सुखाधिकम् ।
पूर्णचन्द्रे पूर्णफलं क्षीणे स्वल्पफलं भवेत् ॥ १५०
नीचारिप्रेष्यमष्षष्ठे दायेशाद्रन्ध्ररिष्फगे ।
मरणं दारपुत्राणां नाशो[5] भूपतिना भयम् ॥ १५१
पशुधान्यक्षयश्चैव[6] चोराग्निनृपपीडनम् ।
द्वितीयद्यूननाथे तु देहजाड्यं मनोरुजा[7] ॥ १५२
अपमृत्युजपं चैव दुर्गालक्ष्मीजपं चरेत् ।
श्वेताङ्गां महिषीं दद्याद्दानेनारोग्यमादिशेत् ॥ १५३

---

1. क्षयं चैव
2. संभवम्
3. यानाद्धनावाप्ति
4. सिद्धि
5. नाशं
6. क्षयं चैव
7. रुजम्

குஜதசையில் சந்த்ரனுடைய அந்தராந்தரபுக்தி தினம் 17, நாழி 30

तत्फलम्—

लोके विख्यातकीर्तिश्च लोकानुग्रहकारिता[1] ।
समत्वं सर्वभूतेषु भौमस्यान्तगते विधौ ॥ १५४

குஜதசையில் சந்த்ரனுடைய ஸூக்ஷ்மபுக்தி நாழி 24, விநாடி 2

तत्फलम्—

शुचित्वं सर्वसंपत्तिर्देवब्राह्मणतत्परः ।
सर्वव्याधिविनिर्मुक्तो भौमसूक्ष्मगते[2] विधौ ॥ १५५

குஜதசையில் சந்த்ரனுடைய ப்ராணபுக்தி நாழி 2, விநாடி 27

फलम् —

भोजनानि च संपत्तिर्वस्त्राभरणवाजिनः ।
शीतोष्णे सुखसन्तोषो[3] भौमप्राणगते विधौ ॥ १५६

## अथ राहुदशाफलमुच्यते

### अवतारिका

राहोर्वृषोच्चं[4] केतोस्तु वृश्चिकं तुङ्गसंज्ञितम्[5] ।
मूलत्रिकोणं कर्की च क्रिया मित्रभमुच्यते ॥ १
एतत्सप्तमराशिस्तु केतोर्मूलत्रिकोणभम् ।
षष्ठाष्टरिष्फगो राहुस्तद्दाये कष्टदो भवेत् ॥ २
उच्चस्थस्सैंहिकेयस्तु तत्पाके सुखदो भवेत् ।
राज्यं करोति मित्राग्नि धनधान्यादिवर्धनम् ॥ ३
राहुर्नीचस्थितो दाये चोराग्निनृपभीतिभिः ।
उद्बन्धनं विषाद्भीतिं कुरुते सिंहिकासुतः ॥ ४

---

1. कारता
2. भौमस्सूक्ष्मगते
3. सन्तोषं
4. राहोर्वृषोच्चं
5. संज्ञिकम्

राहोर्दशायां प्राप्तायां[1] नृपचोराग्निपीडनम् ।
विदेशयानदुःखं च वनवासाद्भयं ध्रुवम् ॥ ५
लग्नगतराहुदाये बुद्धिविहीनं विषाग्निशस्त्राद्यैः ।
बन्धुविनाशं कुरुते दुष्कीर्तिं पराजयं कुरुते ॥ ६
राहोर्दशायां[2] धनराशिसस्यै[3] राज्ञा[4] च वित्तं ह्रियते विशेषात् ।
कुभोजनं कुत्सितराजसेवनं मनोविकारं त्वनृतं प्रकोपम् ॥ ७
तृतीयराहुस्थितदायकाले पुत्रार्थदारात्मजसोदराणाम् ।
सौख्यं कृषेर्वर्धनमाधिपत्यं विदेशयानं नरपालपूजाम्[5] ॥ ८
चतुर्थराशिस्थितराहुकाले मातुर्विनाशस्त्वथवा[6] तदीयः[7] ।
क्षेत्रार्थनाशो[8] नृपतेः प्रकोपो[9] यानादिपातित्वमनेकदुःखम् ॥ ९
चोराग्निबन्धनार्तिमनोविकारो[10] दारात्मजानामपि रोगपीडा ।
चतुर्थराशिस्थितराहुदाये प्रभग्नसंस्कारकलत्रपुत्राः[11] ॥ १०
बुद्धिभ्रमो[12] भोजनसौख्यनाशो[13] विद्याविवादः[14] कलहश्च[15] दुःखम् ।
कोपो[16] नरेन्द्रस्य सुतस्य नाशो[17] राहोस्सुतस्थस्य दशाविपाके ॥ ११
दशाविपाके[18] त्वरिगस्य राहोश्चोराग्निभूपैर्भयमाप्तनाशः[19] ।
प्रमेयगुल्मक्षयपित्तरोगान्[20] वदेच्च रोगं त्वथवा मृतिं वा ॥ १२
कलत्रराशिस्थितराहुदाये कलत्रनाशं समुपैति शीघ्रम् ।
विदेशयानं कृषिभाग्यहानिं सर्पाद्भयं मृत्युसुतार्थनाशम् ॥ १३
राहोर्दशायां निधनस्थितस्य यमालयं याति सुतार्थदारैः ।
चोराग्निभूपैः स्वकुलोद्भवैश्च भयं मृगैर्वा वनवासदुःखम् ॥ १४
राहोर्दशायां नवमस्थितस्य पत्युर्विनाशं[21] लभते मनुष्यः ।
विदेशयानं गुरुबन्धुनाशं स्नानं समुद्रस्य सुतार्थनाशम् ॥ १५

---

1. संप्राप्ते
2. राहोर्दशाय
3. सस्य
4. राजा
5. पूज्यम्
6. विनाशस्त्वथवा
7. तदीयम्
8. क्षेत्रार्थनाशं
9. प्रकोपं
10. विकारं
11. पुत्रम्
12. भ्रमं
13. नाशं
14. विवादं
15. कलहं च
16. कोपं
17. नाशं
18. विभाके
19. नाशम्
20. रोगं
21. पतुविनाशं

मानस्थितस्यापि दशाविपाके राहोः प्रवृत्तिं लभते मनुष्यः ।
पुराणधर्मश्रवणादिभिश्च गाङ्गयतोयैरतिशुद्धदेहः ॥ १६

सौम्यर्क्षगश्चेत् फलमेवमेव पापर्क्षगश्चेन्न तथा भवेद्धि ।
प्रोक्तं फलं यत्सकलं तथैवं सौम्यर्क्षगश्चेच्छुभमन्यथा स्यात् ॥ १७

पापक्षेत्रगतो राहुः कर्मस्थः पापसंयुतः ।
अभिशब्दस्तदा काले चोरभूपाग्निपीडनम् ॥ १८

आयराशिगतो राहुस्तत्पाके नृपमाननम्[1] ।
धनाप्तिं दारलाभं च गृहे क्षेत्रार्थसंपदः ॥ १९

व्ययगतराहुदशायां देशभ्रंशं मनोरुजं लभते ।
विच्छिन्नदारपुत्रं कृषिधनधान्यसंपदं नाशम् ॥ २०

कुलीरगे[2] मेषयुतस्य राहोर्दशाविपाके धनलाभमेति ।
विद्याविनोदं नृपमाननं च कलत्रपुत्रार्थसुखं प्रयाति ॥ २१

पार्थोनमीनालिगतस्य राहोर्दशाविपाके सकलं विनाशम् ।
देशाधिपत्यं नरवाहनं च दशावसाने सकलं विनाशम् । २२

पापर्क्षसंयुक्तफणीन्द्रदाये देहस्य कार्श्यं स्वकुलस्य नाशम् ।
भूपाद्भयं वञ्चनचोरभीतिं प्रमेहकासक्षयमूत्रकृच्छ्रम् ॥ २३

पापदृष्टियुतो राहुः कर्मनाशं करोति च ।
उद्योगभङ्गदेहार्तिं चोराग्निनृपपीडनम् ॥ २३

शुभदृष्टियुतो राहुः करोति सकलक्रियाम् ।
राजमाननमर्थाप्तिं बधूनां मरणं ध्रुवम् ॥ २५

उच्चग्रहयुतो राहू राज्यलाभं करोति च ।
स्त्रीपुत्रधनसंपत्तिं वस्त्राभरणलेपनम् ॥ २६

नीचग्रहयुते[3] राहौ[4] नीचभृत्यानुजीवनम् ।
कुभोजनं कुदारांश्च[5] कुपुत्राँल्लभते नरः ॥ २७

दशादौ दुःखमाप्नोति दशामध्ये सुखं यशः ।
दशान्ते स्थाननाशं च गुरुपित्रादिनाशनम् ॥ २८

भार्यावियोगज्वरितस्तु[6] शरीरदुःखं द्रव्यस्य हानिरतिकष्टपरंपराश्च[7] ।
पापानुबन्धबहुकष्टदरिद्रयुक्तो राहोर्दशागमनकालकलिङ्गिनश्च ॥ २९

---

1. नृपमाननः
2. कुलगो
3. युतो
4. राहुः
5. कुदारं च
6. संयोगपरत्वेऽपि ग इति ह्रस्वो ग्राह्यः
7. परंपराच

अन्यच्च—

राजपीडा भवेन्मृत्युरर्थहानिः पितुर्मृतिः ।
स्थाननाशो मनोदुःखं राहोरादिदशाफलम् ॥ ३०

भवति फणिजदशायां भूपचोरादिशस्त्रैः
ज्वरजठररुक्कुष्ठैः[1] पीडनं तापनं च ।
जलविषशिखितिर्यग्भीतिरर्थक्षयः स्यात्
गुरुसुतमरणं स्त्रीबन्धुरोगादिभिश्च ॥ ३१

देशभ्रंशं मानहानिं विवादं भूपैर्मित्रैर्बन्धनं नीचसेवाम् ।
कुर्याद्राहुर्द्व्याधिमन्तर्दशायामूनं चाङ्गे पातनं भूमिबन्धम् ॥ ३२

तुहिनकिरणशत्रोरन्तरान्तर्दशायां
विविधविषभयं स्यान्मूर्ध्नि रोगश्च[2] दुःखम् ।
स्वजनविषयनाशः[3] सर्पतः कोपभीतिः[4]
स्वकुलगमतिमान्द्यं पापकृत्येषु बुद्धिः
कुर्याद्राहुः पञ्चमायां दशायां भीतिं तिर्यग्जातिभिर्वा विषैर्वा ॥ ३३

अन्यच्च—

धृता सा तामसा बुद्धिर्निर्वीर्यो पापमानुषम् ।
मृगसर्पभयं नित्यं यान्ति राहुदशा नराः ॥ ३४
राजपीडा भवेन्मृत्युरर्थहानिः पितुर्मृतिः[6] ।
स्थाननाशो[7] महद्दुःखं राहोराद्यदशाफलम् ॥ ३५
राहोस्तु वृषभं केतोर्वृश्चिकं तुङ्गसंज्ञितम्[8] ।
मूलत्रिकोणकर्की च युग्मचापौ तथैव च ॥ ३६
कन्या च स्वगृहं प्रोक्तं मीने मेषे च मित्रभौ ।
सिंहः स्वोच्चमिति प्रोक्तं तद्दाये बहुराज्यवान् ॥ ३७
आरोग्यं च महासौख्यं राजसंमानभूषणम् ।
राज्यलाभं मित्रसौख्यं धनधान्यादिवर्धनम् ॥ ३८

---

1. संयोगपरत्वेऽपि रु इति ह्रस्वो ग्राह्यः
2. रोगं च
3. नाशं
4. भीतिं
5. बुद्धिम्
6. पितृर्मृतिः
7. नाशं
8. संज्ञिकम्

दारसौख्यं पुत्रलाभं गृहे कल्याणसंभ्रमम् ।
नूतनग्रहनिर्माणं धर्मचिन्ता महोत्सवम् ॥ ३९
विदेशराजसंमानं वस्त्रवाहनभूषणम् ।
शुभैर्दृष्टे शुभैर्युक्ते योगकारकसंयुते ॥ ४०
केन्द्रत्रिकोणलाभे वा दुश्चिक्ये वा धनस्थिते ।
केन्द्रत्रिकोणपतिना संबन्धे शुभराशिगे ॥ ४१
तद्भुक्तौ राजयोगादिर्गृहे[1] लक्ष्मीकटाक्षकृत् ।
महाराजप्रसादेन सर्वसंपत्सुखावहम् ॥ ४२
यवनप्रभुसंमानं गृहे कल्याणवर्धनम् ।
षष्ठाष्टमव्यये राहौ तद्दाये कष्टदो भवेत् ॥ ४३
पापग्रहेण संबन्धे मारकग्रहसंयुते ।
नीचराशिगते वापि स्थानभ्रंशं मनोरुजम् ॥ ४४
विच्छिन्नदारपुत्राणां कुत्सितान्नस्य भोजनम् ।
दशादौ देहपीडां[2] च धनधान्यपरिच्युतिम् ॥ ४५
दशामध्ये तु सौख्यं च विदेशधनलाभकृत् ।
दशान्ते क्लेशमाप्नोति स्थानभ्रंशं मनोव्यथाम्[3] ॥ ४६
लाभस्थानगते राहौ माने वा बलसंयुते ।
आन्दोळिका भवेत्तस्य ग्रामभूम्यादिलाभकृत् ॥ ४७

*ராஹு தசையில் ராஹு புக்தி* வ௫ 2, மீ 8, தினம் 12

फलम्—

राजपीडा[4] च मृत्युश्च[5] अर्थहानिः पितुर्मृतिः ।
स्थाननाशो[6] दारनाशो[7] बन्धुवर्गे धनक्षयः[8] ॥ ४८
रणे भङ्गो नृपाद्भीतिः शृङ्गशस्त्रहतिस्तथा[9] ।
स्वभृत्यजनभीतिश्च राहोरन्तर्दशाफलम् ॥ ४९

---

1. योगादि गृहे
2. पीडा
3. व्यथा
4. पीडां
5. मृत्युं च
6. नाशं
7. नाशी
8. क्षयम्
9. हतस्तथा

अन्यच्च—

कुळीरवृश्चिके चैव कन्यायामुच्यतेऽपि वा ।
तद्भुक्तौ राजसंमानं वस्त्रवाहनभूषणम् ॥ ५१
व्यवसायात्फलाधिक्यं चतुष्पाज्जीवलाभकृत् ।
प्रयाणं पश्चिमे भागे वस्त्रवाहनभूषणम् ॥ ५२
लग्नादुपचये राहौ शुभदृष्टे शुभेक्षिते ।
मित्रांशे तुङ्गलाभांशे योगकारकसंयुते ॥ ५३
राज्यलाभो[1] महोत्साहो[2] वस्त्रवाहनभूषणम् ।
चतुष्पाज्जीवलाभश्च दारपुत्रादिवर्धनम् ॥ ५४
गृहे कल्याणसंपत्ति[3]र्मातृपित्रादिपीडनम् ।
षष्ठाष्टमव्यये राहौ पापयुक्तेऽथ वीक्षिते ॥ ५५
तद्भुक्तौ मरणं ज्ञेयं चोराग्निनृपपीडनम् ।
स्थानभ्रंशो[4] मानहानिः सर्वत्र जनपीडनम् ॥ ५६
द्वितीयसप्तमस्थानस्थितश्चेन्मरणं भवेत् ।
राहोर्दुर्गाजपं कुर्याद्देहारोग्यं महत्सुखम् ।
छागदानं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ ५७

*ராஹு தசையில் ராஹுவினுடைய அந்தராந்தரபுக்தி மீ 4, தினம் 25, நாழி 48*

तत्फलम् —

जलयानाद्भयं मृत्युः पतनात्कार्यसंशयः ।
कार्यहानिर्नियोगश्च अन्तरान्तर्गतेऽप्यहौ ॥ ५८

*ராஹு தசையில் ராஹுவினுடைய ஸூக்ஷ்மபுக்தி தினம் 21, நாழி 52, விநடி 12*

तत्फलम्—

सभ्याय जनभीतिश्च जलदानात्पशुक्षयः[5] ।
पापसञ्चयकारि[6] स्याद्राहोः सूक्ष्मदशाफलम् ॥ ५९

---

1. लाभं
2. महोत्साहं
3. संपत्तिं मातृ
4. भ्रंशं
5. क्षयम्
6. कारी

ராஹு தசையில் ராஹுவினுடைய ப்ராணபுக்தி தினம் 3,
நாழி 16, விஞடி 54, तत्परै 18

तत्फलम्—

अन्नपानसुरक्षः स्याद्विषभीतिस्तथैव च ।
साहसाद्धननाशश्च राहोः प्राणदशाफलम् ॥ ६०

ராஹு தசையில் குருபுக்தி வருஷம் 2, மீ 4, தினம் 24

तत्फलम्—

देशान्तरे महत्सङ्गश्चाज्ञानं[1] विजयः[2] शुभम् ।
राजवर्गाद्धनप्राप्तिः कुलार्थं विष्णुपूजनम् ॥ ६१
संमानं नृपसंपत्तिः स्त्रीलाभो[3] भूषणं तथा ।
साहसादर्थलाभश्च[4] राहोरन्तर्गते गुरौ ॥ ६२
सुखोपनीतिः सुतकर्मलब्धिर्विरोगता रत्नविभूषसंभवः ।
सुपुण्यशास्त्रार्थविचारसंभवः सुरारिदायं च गते बृहस्पतौ ॥ ६३

अन्यच्च—

धनधान्यश्रियो लाभं राजपूजासुतागमम् ।
सर्वप्रियमवाप्नोति राहोरन्तर्गते गुरौ ॥ ६४
राहोरन्तर्गते जीवे लग्नात्केन्द्रत्रिकोणगे ।
स्वोच्चस्वक्षेत्रगे वापि तुङ्गांशे स्वांशकेऽपि वा ॥ ६५
अभीष्टकार्यमैश्वर्यं शत्रुनाशं महत्सुखम् ।
राजवंशे राजयोगं महिषीव[5] समश्नुते ॥ ६६
दिने दिने वृद्धिमेति सितपक्षशशी यथा ।
वाहनादिधनं भूमिर्गृहे[6] गोधनसंकुलम् ॥ ६७
नैर्ऋत्यां पश्चिमे भागे प्रयाणे राजदर्शनम् ।
यत्नकार्यार्थसिद्धिः स्यात् स्वदेशं पुनरष्येति ॥ ६८
उपकुर्वन् ब्राह्मणानां तीर्थयात्रादिकर्मणा ।
वाहनं ग्रामलाभश्च देवब्राह्मणभोजनम् ॥ ६९

---

1. महत्सङ्गमज्ञानं
2. विजयं
3. लाभं
4. लाभं च
5. महीव
6. भूमिगृहे

पुत्रोत्सवादिसन्तोषो[1] नित्यमृष्टान्नभोजनम् ।
नीचे वास्तं गते वापि षष्ठाष्टव्ययराशिगे ॥ ७०

शत्रुक्षेत्रे पापयुक्ते धनहानिर्भविष्यति ।
कर्मविघ्नो महाहानिः पापचिन्ता भविष्यति ॥ ७१

कळत्रपुत्रपीडादि हृद्रोगं राजकार्यकृत् ।
भोजनाम्बरपश्वादिदानधर्मजपादिकम् ॥ ७२

भुक्त्यन्ते राजकोपश्च द्विमासे च धनक्षयः ।
ज्येष्ठभ्रातृविनाशश्च मातृपित्रादिपीडनम् ॥ ७३

दायेशात्[2] षष्ठरन्ध्रे वा रिःफे वा पापसंयुते ।
तद्भुक्तौ धननाशश्च देहपीडा महद्भयम् ॥ ७४

सप्तमद्यूननाथे तु अपमृत्युभयं भवेत् ।
स्वर्णं च प्रतिमादानं शिवपूजां च कारयेत् ।
देहारोग्यं महत्सौख्यं शान्तिं कुर्याद्विचक्षणः ॥ ७५

ராஹு தசையில் குருவினுடைய அந்தராந்தரபுக்தி மீ 3,
தினம் 25, நாழி 12

तत्फलम्—

देवार्चनरतः श्रीमान् कार्यसिद्धिर्धनागमः ।
गुरुपूजा भवेन्नित्यं राहोरन्तर्गते गुरौ ॥ ७६

ராஹு தசையில் குருவினுடைய ஸூக்ஷ்மபுக்தி
நாள் 12, நாழி 26, விநாடி 24

फलम्—

दीर्घदर्शीव संदृष्टः सर्वेषां प्रियदर्शनः ।
दानधर्मरतः शस्तो राहोः सूक्ष्मगते गुरौ ॥ ७७

ராஹு தசையில் குருவினுடைய ப்ராணபுக்தி
நாழி 26, விநாடி 24

फलम्—

अङ्गसौख्यं च निर्भीतिर्वाहनादेश्च संभवः ।
मित्रैः सर्वधनावाप्ती राहोः प्राणगते रवौ ॥ ७८

---

1. सन्तोषं
2. दायेशाष्षष्ठ

ராஹு தசையில் சனிபுக்தி வரு 2, மா 10, தினம் 6

तत्फलम्—

शूद्रवर्गाद्धनच्छेदं तस्करेण धनापहम् ।
शस्त्रपीडां च मृत्युं च ज्वरं वा रोगमादिशेत् ॥ ७९
रोदनं मानहानिश्च वृक्षात् पतनसंभवः ।
मरणं दुर्जनानां च राहोरन्तर्गते शनौ ॥ ८०

अन्यच्च—

समीरपित्तप्रभवरत्वसृक्क्षति[1]स्तनूजयोषित्सहजैश्च विग्रहः ।
स्वभृत्यनाशश्च पदच्युतिर्भवेदिति प्रजायुःप्रभवे स्वपुत्रे ॥ ८१

अन्यच्च—

कलहो[2] द्रव्यहानिश्च[3] मानहानिर्महोद्भवम्[4] ।
स्थानभ्रष्टगतिश्चैव[5] राहोरन्तर्गते शनौ ॥ ८२
रोदनं मानहानिश्च वृक्षात् पतनसंभवः ।
मरणं दुर्जनानां च राहोरन्तर्गते शनौ ॥ ८३
राहोरन्तर्गते मन्दे लग्नात्केन्द्रत्रिकोणगे ।
स्वोच्चमूलत्रिकोणे वा दुश्चिक्ये लाभराशिगे ॥ ८४
तद्भुक्तौ[6] राजसंमानं राज्यलाभं महत्सुखम् ।
विवाहोत्सवकार्याणि कृत्वा पुण्यानि भूरिषु ॥ ८५
आरामकरुणयुक्ततटाकान् कारयिष्यति ।
यौवनं[7] प्रभुसंमानं समानप्रभुदर्शनम् ॥ ८६
प्रयाणं पश्चिमे भागे प्र॰ मूलात्सुशोभनम् ।
पुत्रदारसुखं चैव स्वदेहं पुनरेष्यति ॥ ८७
नीचारिक्षेत्रगे मन्दे षष्ठाष्टव्ययराशिगे ।
नीचचोराग्निभीतिश्च दारपुत्रादिपीडनम् ॥ ८८
आप्तबन्धुमनस्तापं दायादिजनविज्वरः[8] ।
व्यवहारश्च[9] कलहश्चतु[10]ष्पाज्जीवनाशनम् ॥ ८९

---

1. प्रभवत्वसृक्षिति
2. कलहं
3. हानिं च
4. हानिर्मिहोद्भवम्
5. गतिं चैव
6. तदुक्तौ
7. यौवनः
8. विज्वरम्
9. व्यवहारं च
10. कलहं चतु

अन्ये तु राजभीतिश्च स्थानं भ्रष्टं मनोरुजम् ।
दायेशात्षष्ठ[1]रिष्फे वा रन्ध्रे वा पापसंयुते ॥ ९०

हृद्रोगो[2] मानहानिश्च विषाग्निः शस्त्रपीडनम् ।
अन्नद्वेषातिसारश्च[3] गुल्मवृद्धिस्तथा भवेत् ॥ ९१

कुभोजनं कोद्रवजातिपूर्वकं
विदेशवासो[4] नरपालकोपः[5] ॥ ९२

द्वितीयद्यूननाथेन अपमृत्युस्तथा भवेत् ।
कृष्णाङ्गां महिषीं दद्याद्दानेनारोग्यमादिशेत् ॥ ९३

ராஹுதசையில் சனியினுடைய அந்தராந்தரபுக்தி மீ 5, தினம் 12, நாழி 27

तत्फलम्—

नीचैः कलहसंपत्तिर्दुराचारसहो भवेत् ।
दुर्व्यापाराद्वस्तुहानी राहोरन्तर्गते शनौ ॥ ९४

ராஹுதசையில் சனியினுடைய ஸூக்ஷ்மபுக்தி தினம் 23, நாழி 15, விநாடி 6

तत्फलम्—

कुमार्गात्कुत्सितोग्रश्च[6] दुष्टस्तत्पारिसेकः ।
असतां सङ्गतिश्चैव राहोः सूक्ष्मगते शनौ ॥ ९५

ராஹுதசையில் சனியினுடைய ப்ராணபுக்தி தினம் 3, நாழி 27, விநாடி 50, தத்பரை 39

फलम्—

गृहदाहशरीरैश्च नीचैरपहृतं धनम् ।
रोगदर्शनसंपत्ती राहोः प्राणगते शनौ ॥ ९६

ராஹுதசையில் புதபுக்தி வரு 2, மீ 6, தினம் 18

तत्फलम्—

दृष्टे वर्गे धनं लाभं विद्यालाभं शुभप्रियम् ।
सत्कर्मसेवनं चापि शास्त्रकर्म समादिशेत् ॥ ९७

विवाहं मानलाभं च पुत्रलाभं धनागमम् ।
बन्धुकल्याणसंपत्ती[7] राहोरन्तर्गते बुधे ॥ ९८

---

1. दायेशाष्षष्ठ
2. हृद्रोगं
3. सारं च
4. वासं
5. कोपम
6. कुसितोग्रश्च
7. सपत्ति

सुतस्य सिद्धिः[1] स्वसुहृत्समागमो
मनोविनिन्दित्वमतीव जायते ।
रतिक्रियाभूषणकौशलोदयो[2]
भुजङ्गसंवत्सरहारिणीन्द्रजे ॥ ९९

विद्यालाभो[3] महत्सौख्यं वातव्याधिश्च[4] संभवम् ।
पुत्रमित्रसमायोगो[5] राहोरन्तर्गते बुधे ॥ १००

राहोरन्तर्गते सौम्ये भाग्ये वा स्वर्क्षगेऽपि वा ।
तुङ्गे वा केन्द्रराशिस्थे पुत्रे वा केन्द्रलाभगे ॥ १०१

राजयोगं प्रकुर्वीत गृहे कल्याणवर्धनम् ।
व्यापारेण धनं लाभं विद्यावाहनमुत्तमम् ॥ १०२

विवाहोत्सवकार्याणि चतुष्पाज्जीवलाभकृत् ।
सौम्ये मासि महत्सौख्यं स्ववारे राजदर्शनम् ॥ १०३

सुगन्धपुष्पशय्यादि स्त्रीसौख्यं चातिशोभनम् ।
महाराजप्रसादेन धनलाभं महादशम् ॥ १०४

दायेशात्केन्द्रलाभे वा दुश्चिक्ये भाग्यकर्मगे ।
देहारोग्यं महोत्साह इष्टसिद्धिः सुखावहम् ॥ १०५

पुण्यश्लोकादिकीर्तिश्च पुराणश्रवणादिकम् ।
शुभदृष्टे शुभैर्युक्ते दारपुत्रधनं पदम् ॥ १०६

ऐश्वर्यं सततं[6] ब्रूयाद्विद्याशास्त्रविचक्षणः ।
विवाहयज्ञदीक्षां च दानधर्मदयाधिकम् ॥ १०७

बहुदेशाधिपत्यं च नरवाहनसंभवम् ।
षष्ठाष्टमव्यये सौम्ये मन्दाराहियुतेक्षिते ॥ १०८

दायेशात्षष्ठरिष्फे वा रन्ध्रे वा पापसंयुते ।
देवब्राह्मणनिन्दा च भोगभोग्यविहीनवान् ॥ १०९

सत्यहीनश्च दुर्बुद्धिश्चोराग्निनृपपीडनम् ।
अकस्मात्कलहश्चैव[7] गुरुपुत्रादिनाशनम् ॥ ११०

कलहो[8] नीचदुःखानि देहजाड्यं धनक्षयः ।
अर्थव्ययो[10] राजकार्यं दारपुत्रादिपीडनम् ॥ १११

---

1. सुरस्वसिद्धिः
2. काशलोदयो
3. लाभं
4. व्याधिं च
5. समयोग
6. ऐश्वर्यस्सततं
7. कलहं चैव
8. कलहं
9. क्षयम्
10. व्ययं

द्वितीयद्यूननाथे वा अपमृत्युस्तथाश्रितः ।
तद्दोषपरिहारार्थं विष्णुसाहस्रकं जपेत् ।
स्वगृह्योक्तविधानेन शान्तिं कुर्याद्विचक्षणः ॥ ११२

ராஹு தசையில் புதனுடைய அந்தராந்தர்புக்தி மீ 4, தினம் 17, நாழி 42

तत्फलम्—

स्वदेहाश्च[1] वियोगाश्च धान्यं नानाविवर्धनम् ।
भूपालस्य प्रियोऽप्यासीद्राहोर[2]भ्यन्तरे बुधे ॥ ११३

ராஹு தசையில் புதனுடைய ஸூக்ஷ்மபுக்தி தினம் 2, நாழி 31, விநாடி 18

फलम् —

स्त्रीसंभोगरतिर्वाग्मी लोकसंभावितस्तथा[3] ।
इष्टसिद्धिः पुत्रलाभो राहोः सूक्ष्मगते बुधे ॥ ११४

ராஹு தசையில் புதனுடைய ப்ராணபுக்தி தினம் 3, நாழி 5, விநாடி 57, तत्परै 15

फलम् —

गुरूपदेशविभवो गुरुसत्कारबन्धनम् ।
गुणवान् शीलवानासीद्राहोरन्तर्गते बुधे ॥ ११५

ராஹு தசையில் கேதுபுக்தி வரு 1, தினம் 18

फलम् —

अधोभागे च निज्ञक्रि(?) दुर्जनैरपि भञ्जनम् ।
कुलदोषं गुरुद्वेष्यं भ्रातृहीनं समादिशेत् ॥ ११६
मरणं मारणं चैव भूतावेशः[4] पराभवः[5] ।
भोजननानि च हानिः स्याद्राहोरन्तर्गते ध्वजे ॥ ११७
विषाग्निशस्त्राहतिरापदुद्गमः
शरीरकम्पः ससुहृद्गुरुव्यथा ।
विषप्रमादः पतनं च विभ्रमो
राहोस्तु वर्षान्तगते च केतौ ॥ ११८

---

1. स्वदेहाश्च
2. प्यासीराहो
3. लोकसंभवनंस्तथा
4. भूतावेशं
5. पराभवम्

अन्यच्च—

कळत्रपुत्रव्यसनमर्थनाशः[1] पदच्युतिः[2] ।
मूत्रकृच्छ्रं सर्पभयं राहोः केतुगतौ[3] यथा ॥ ११९

राहोरन्तर्गते केतौ भ्रमणं राजविड्वरम् ।
शीतज्वरादिरोगश्च क्षुद्रशून्यादिरोगकृत् ॥ १२०

पुत्रदारावियोगश्च चतुष्पाज्जीवनाशनम् ।
अष्टमाधिपसंयुक्ते देहजाड्यं मनोरुजा[4] ॥ १२१

शुभयुक्ते शुभैर्दृष्टे देहसौख्यं महत्सुखम् ।
राजसंमानभूषाप्तिर्गृहे शुभकरं भवेत् ॥ १२२

लग्नाधिपेन संयुक्ते लाभे वा भवति ध्रुवम् ।
चतुष्पाज्जीवलाभः[5] स्यात् केन्द्रे वाथ त्रिकोणगे ॥ १२३

षष्ठाष्टमव्यये केतौ तद्भुक्तौ वा मृतिप्रद. ।
चोराग्निव्रणभीतिश्च भ्रातृद्वेषो[6] मनोरुजा[7] ॥ १२४

पितृमातृविनाशश्च देशत्यागो ज्वरं विषम् ।
पापयुक्तेऽथवा दृष्टे सर्वत्र जनपीडनम् ॥ १२५

स्वप्रभोश्च महाकष्टं वैषम्यं जनहिंसकः ।
मकरे सिंहकेतुश्च कलहं बन्धुवैरिणाम्[8] ॥ १२६

द्वितीयद्यूननाथश्चेद्देहबाधा भविष्यति ।
तद्दोषपरिहारार्थं छागदानं च कारयेत् ॥ १२७

ராஹு தசையில் கேதுவினுடைய அந்தராந்தரபுக்தி
தினம் 22, நாழி 2

तत्फलम्—

शूरत्वं[9] मानहानिः स्यात् पुत्रनाशः[10] प्रजाक्षयः[11] ।
प्रेरितोपद्रवैः पीडा राहोरभ्यन्तरे व्रजे ॥ १२८

ராஹு தசையில் கேதுவினுடைய ஸூக்ஷ்மபுக்தி தினம் 8,
நாழி 30, விநாடி 18

फलम्—

माधुर्यं मानहानिः स्याद्बन्धनं चाप्तमारणम् ।
चतुष्पाज्जीवहानिः स्याद्राहोः सूक्ष्मगत व्रजे ॥ १२९

---

1. अर्थनाशं
2. पदच्युतिम्
3. केतुर्गतो
4. मनोरुजम्
5. लाभं
6. द्वेषं
7. रुजम्
8. वैरिणम्
9. शौर्यत्वं
10. नाशं
11. क्षयम्

ராஹு தசையில் கேதுவினுடைய ப்ராணபுக்தி தினம் 1,
நாழி 16 வினடி 36, तत्परै 27

फलम् —

स्त्रीपुत्रेण विरोधश्च[1] गृहान्निष्क्रमणं तथा ।
साहसात्कार्यहानिः स्याद्राहोः प्राणगते ध्वजे ॥ १३०

ராஹு தசையில் சுக்ரபுக்தி வருடம் 3

तत्फलम् —

कलत्रादपि सौख्यं च क्षीरसेवां समादिशेत् ।
स्वच्छवृत्तिं[2] प्रतापं च पुत्रैः पुष्टफलप्रदम् ॥ १३१
भूमिलाभं पुत्रलाभं धनधान्यविवर्धनम् ।
गोमहिष्यादिलाभं च राहोरन्तर्गते भृगौ ॥ १३२
सर्वस्व[3]लब्धिः सुदृशां समागम-
स्तुरङ्ग[4]मातङ्गमहीसमुद्भवः ।
कफानिलार्तिः स्वजनैर्विरोधिता
भुजङ्गमायुर्हरतीह [5]भार्गवे ॥ १३३

अन्यच्च—

ज्ञानार्थं सर्वनाशश्च [6]वेश्यास्त्रीपुत्रसंभवः ।
कष्टं चोरक्रिया चैव राहुः शुक्रगतो[7] यदि ॥ १३४
राहोरन्तर्गते शुक्रे लग्नात्केन्द्रत्रिकोणगे ।
लाभे वा बलसंयुक्ते योगात्प्रबलमादिशेत् ॥ १३५
विप्रमूलाद्धनप्राप्तिं[8] गृहे गोक्षीरसंकुलम् ।
गुरुभक्तिरतो नित्यं जन्मदेशे सुखावहम् ॥ १३६
पुत्रोत्सवादिसन्तोषं गृहे कल्याणसंभ्रमम् ।
स्वोच्चस्वक्षेत्रगे चैव तुङ्गांशे स्वांशकेऽपि वा ॥ १३७
वाहनं राजसंमानं राज्यलाभो[9] महत्सुखम् ।
नूतनगृहनिर्माणं नित्यं मृष्टान्नभोजनम् ॥ १३८
कलत्रपुत्रविभवो[10] बन्धुसंयुक्तभोजनम् ।
अन्नदानप्रदं नित्यं दानधर्माधिकं फलम् ॥ १३९

---

1. विरोधं च
2. वृत्तिः
3. सुरस्व
4. समागं तुरङ्ग
5. सर्वनाशं च
6. भुजङ्गमायूहरतीह
7. राहो गते
8. प्राप्तिः
9. लाभ
10. विभवं

महाराजप्रसादेन वाहनाम्बरभूषणम् ।
व्यवसायात्फलाधिक्यं विवाहो[1] मौञ्जिबन्धनम् ॥ १४०
षष्ठाष्टमव्यये शुक्रे नीचे रिष्फेऽरिभांशके ।
मन्दारराहुसंयुक्ते तद्भुक्तौ रोगमादिशेत् ॥ १४१
अकस्मात्कलहश्चैव[2] पुत्रमित्रादिनाशनम् ।
स्वबन्धुजनहानिः स्यात् सर्वत्र जनपीडनम् ॥ १४२
दायादिकलहश्चैव स्वप्रभाश्चापि मृत्युकृत् ।
कलत्रवर्गनाशश्च[3] शूलरोगादिसंभवः[4] ॥ १४३
दायेशात्केन्द्रराशिस्थे त्रिकोणे पापसंयुते ।
लाभे वा धनराशिस्थे पापयुक्ते धनक्षयः ॥ १४४
शुभयुक्ते शुभैर्दृष्टे क्षेत्रलभो[5] महाक्षुधा[6] ।
सुगन्धपरिमलप्रीतिग्लानं विद्याविचक्षणम् ॥ १४५
छत्रचामरयोगाश्च गजवाजिसमन्वितः[7] ।
महाराजप्रसादेन इष्टसिद्धिसुखं भवेत् ॥ १४६
दायेशात्केन्द्ररिष्फे वा षष्ठे वा पापसंयुते ।
विषाग्निनृपचोराणां मूत्रकृच्छ्रं महद्भयम् ॥ १४७
प्रमेहो[8] रुधिरं रोगं कुत्सितान्नं शिरोरुजा[9] ।
कारागृहप्रवेशश्च[10] राजदण्डाद्धनक्षयः ॥ १४८
द्वितीयद्यूननाथे वा दारपुत्रादिनाशनम् ।
आत्मपीडाभयं चैव अपमृत्युस्तथा भवेत् ॥ १४९
दुर्गालक्ष्मीजपं कृत्वा मृत्युनाशकरो भवेत् ।

*ராஹு தசையில் சுக்ரனுடைய அந்தராந்தரபுக்தி பீ* 6

तत्फलम् —

विदेशाद्वाहनं वस्तु च्छत्रचामरवैभवः[11] ।
अङ्गनाभोगसंपत्ती राहोरभ्यन्तरे भृगौ ॥ १५०

---

1. विवाहं
2. कलहं चैव
3. नाशं च
4. संभवम्
5. लाभं
6. महाक्षुधिम्
7. समन्वितम्
8. प्रमेहं
9. रुजम्
10. प्रवेशं च
11. वभवम्

ராஹு தசையில் சுக்ரனுடைய ஸூக்ஷ்மபுக்தி மீ 1

तत्फलम्—

बन्धनान्मुच्यते बद्धो स्थानमानार्थसञ्चयः ।
कारणं द्रव्यलाभश्च[1] राहोः सूक्ष्मगते भृगौ ॥ १५१

ராஹு தசையில் சுக்ரனுடைய ப்ராணபுக்தி தினம் 3, நாழி 38—47

तत्फलम्—

छत्रचामरसंपत्तिः सर्वात्मफल[2]सञ्चयः ।
शिवालयप्रतिष्ठा च राहोः प्राणगते भृगौ ॥ १५२

ராஹு தசையில் ரவிபுக்தி மீ 10, தினம் 24

तत्फलम् —

दुष्कर्मत्वं कलत्रे च शयने मरणं ध्रुवम् ।
अन्यथा व्याधिनिर्बन्धो[3] वञ्चनं पितृनाशनम् ॥ १५३
उष्णादिदेहसन्तापः[4] शिरोभ्रमणकर्मिता ।
ब्रह्मराक्षसपीडा[5] च राहोरन्तर्गते रवौ ॥ १५४
अरिव्ययः स्यादतिपीडनं दृशो-
र्विषाग्निशस्त्राहतिरापदुद्गमः[6] ।
वक्रासुताश्च (?) नृपतेर्महद्भयं
विलेशयायुष्यगते तु भास्करे ॥ १५५

अन्यच्च—

रक्तपीतज्वरं पीडा शस्त्रारिर्नेत्रपीडनम् ।
अग्निचोरभयं सर्पाद्राहोरन्तर्गते रवौ ॥ १५६

ग्रन्थान्तरे—

उष्णादिदेहसन्ताप[7] शिरोभ्रमणकर्शितः ।
राहोरन्तर्गते सूर्ये स्वोच्चस्वक्षेत्रकेन्द्रगे ॥ १५७
लाभत्रिकोणगे[8] वापि तुङ्गांशे स्वांशकेऽपि वा ।
शुभग्रहेण संदृष्टे राजप्रीतिकरं शुभम् ॥ १५८

1. लाभं च
2. सर्वात्वलाफल
3. निर्बन्धं
4. सन्तापं
5. ब्रह्मराक्षसपीडं
6. उद्गमम्
7. सन्तापं
8. लाभत्रिकोणगं

धनधान्यसमृद्धिश्च[1] अल्पसौख्यं सुखावहम् ।
अल्पग्रामाधिपत्यं च दारपुत्रादिवर्धनम् ॥ १५९

लग्नभावाधिपे युक्ते गुरुचन्द्रेण वीक्षिते ।
राजाश्रयो[2] महाकीर्तिर्विदेशे[3] वाहनं तथा ॥ १६०

देशाधिपत्यं योगश्च गजाश्वाम्बरलाभकृत् ।
मनोऽभीष्टप्रसादश्च[4] गृहे लक्ष्मीकटाक्षकृत् ॥ १६१

षष्ठाष्टमव्यये सूर्ये पापदायेऽर्कभुक्तिषु ।
ज्वरारिसाररोगाश्च कलहो[5] राजविद्वरम् ॥ १६२

प्रयाणे शत्रुवृद्धिश्च चोराग्निनृपपीडनम् ।
सर्वत्र जनवैषम्यं गुरुपुत्रादिनाशनम् ॥ १६३

कारागृहप्रवेशश्च[6] निगळ बन्धुनाशनम् ।
दायेशात्केन्द्रकोणे वा दुश्चिक्ये लाभगेऽपि वा ॥ १६४

विदेशराजसंमानं कल्याणं च शुभावहम् ।
दायेशात्केन्द्ररिप्फे वा रन्ध्रे वा पापसंयुते ॥ १६५

गुल्मच्छार्दिररोगश्च[7] ग्रन्थि[8]मेहादिपीडनम् ।
छर्दिगुल्मक्षयश्चैव[9] बन्धुद्वेषो[10] मनोरुजा[11] ॥ १६६

द्वितीयद्यूननाथे तु दाये वा मृत्युदो भवेत् ।
आत्मबन्धुप्रभुजनैश्चाप्तभूपतिनाशनम् ॥
सूर्यप्रीतिकरं चैव शान्तिं कुर्याद्यथाविधि । १६७

ராஹுதசையில் ரவியினுடைய அந்தராந்தரபுக்தி மீ 1,
தினம் 18, நாழி 36

तत्फलम् —

दानधर्मरतिः श्रीमान् शरीरोपद्रवच्युतिः
संसारविरहार्तिश्च राहोरभ्यन्तरे रवौ ॥ १६८

---

1. समृद्धिं च
2. राजाश्रयं
3. कीर्तिं विदेशे
4. प्रसादं च
5. कलहं
6. प्रवेशं च
7. छार्दिमरोगश्च
8. ग्रन्थि
9. क्षयं चैव
10. द्वेषं
11. रुजम्

ராஹு தசையில் ரவியினுடைய ஸூக்ஷ்மபுக்தி தினம் 7, நாழி 17

तत्फलम् —

रक्तार्शोगुल्मरोगश्च कुक्ष्यक्षिगुदरुग्भवेत् ।
वाहनादिसुखं वास्ति राहोः सूक्ष्मगते रवौ ॥ १६९

ராஹு தசையில்ரவியினுடைய ப்ராணபுக்தி தினம் 1, நாழி 5, விநாடி 18, तत्परै 6

तत्फलम् —

अन्नादिरोगभीतिः स्याद्रजोपद्रवसंभवः ।
चतुष्पादादि[1]भीतिश्च राहोः प्राणगते रवौ ॥ १७०

ராஹு தசையில் சந்த்ரபுக்தி வருஷம் 1, மீ 6

फलम् —

मातुलस्य महाव्याधिर्मरणं जलदोषजम् ।
मातृरोगः[2] कृपाहीनं कल्मषं शत्रुनाशनम् ॥ १७१
जलयानधनावाप्तिः क्षेत्रशिक्षारतस्तथा ।
वाहनादिषु बुद्धिः स्याद्राहोरन्तर्गते विधौ ॥ १७२

वधूविनाशः[3] कलहो मनोरुजा
कृषिक्रियावित्तपशुप्रजाक्षयः ।
सूनद्विपत् (?) सलिलाद्भयं भवे-
द्विधौ दशा हन्तरि देवविद्विषः । १७३

अन्यच्च—

स्त्रीभिश्च कलहो[4] नित्यं मातृनाशो[5] धनक्षयः[6] ।
विरोधो[7] बान्धवैः स्त्रीभी राहोरन्तर्गते विधौ[8] ॥ १७४
राहोरन्तर्गते चन्द्रे स्वक्षेत्रे स्वोच्चराशिगे ।
केन्द्रात्रिकोणे लाभे वा मित्रर्क्षे गुरुसंयुते ॥ १७५
राजत्वं नृपपूजां[9] च यानार्थधनलाभकृत् ।
आयुरारोग्यमैश्वर्यं भूषणं पुत्रवैभवः[10] ॥ १७६

---

1. चतुष्पादिति
2. मातृरोगं
3. विनाशं
4. कलहं
5. नाशं
6. क्षयम्
7. विरोधं
8. शशी
9. नृपपूज्यं
10. वैभवम्

पूर्णे [illegible] फलं पूर्गे राज्यप्राप्तिर्न संशयः ।
अश्ववाहनयोगाश्च चतुष्पाज्जावलाभकृत् ॥ १७७
नूतनगृहलाभश्च[1] गृहे कल्याणवैभवः[2] ।
पापयुक्तेऽथवा चन्द्रे षष्ठाष्टव्ययराशिगे ॥ १७८
क्षीणचन्द्रे पापयुते राज्यभ्रंशकरो भवेत् ।
पुत्रशोको[3] मनस्तापो[4] मातृपित्रादिनाशनम् ॥ १७९
अकस्मात्कलहश्चैव[5] दानपीडा धनक्षयः[6] ।
दक्षिणां दिशमाश्रित्य प्रयाणं राजसेवनम् ॥ १८०
पश्चादिष्टफलप्राप्तिः स्वदेशं पुनरेष्यति ।
दायेशात्सुखभाग्यस्थे केन्द्रे वा लाभगेऽपि वा ॥ १८१
लक्ष्मीकटाक्षचिह्नानि गृहे कल्याणसंभवः[7] ।
यत्नकार्यार्थसिद्धिः स्याद्धनधान्यसुखावहम् ॥ १८२
सत्कीर्ती[8] राजसंमानं देवताराधनं महत् ।
वापीकूपतटाकादि सत्कथाश्रवणादिकम् ॥ १८३
दायेशात्षष्ठरन्ध्रे[9] वा व्यये वा पापसंयुते ।
बहुमूत्रकरो[10] रोगो[11] कामलापाण्डुरोगकृत् ॥ १८४
पीडा च क्षुद्रभावादिगृहक्षेत्रादिनाशनम् ।
मार्गे चोरभयं किञ्चित्प्राणाधिक्यं महोदरम् ॥ १८५
द्वितीयद्यूननाथे तु अपमृत्युस्तथाश्रितः ।
इन्द्रेताङ्गां महिषीं दद्याद्दानेनारोग्यमादिशेत् ॥ १८६

ராஹு தசையில் சந்திரனுடைய அந்தராந்தரபுக்தி மீ 1,
தினம் 15

फलम्—

सुखभोगा भवेन्नित्यं मार्गवर्तिरनिन्दिताः ।
परोपकारसिद्धिः स्याद्राहोरभ्यन्तरे विधो ॥ १८७

---

1. लाभं च
2. वैभवम्
3. शोकं
4. मनस्तापं
5. कलहं चैव
6. क्षयम्
7. संभवम्
8. सत्कीर्तिं
9. दायेशात्षष्ठरन्ध्रे
10. करं
11. रोगं

ராஹு தசையில் சந்த்ரனுடைய ஸூக்ஷ்மபுக்தி
தினம் 12, நாழி 9

तत्फलम्—

विद्यागमो धनावाप्तिर्विद्यालाभो महद्यशः ।
विद्यार्जनपरो नित्यं राहोः सूक्ष्मगते विधौ ॥ १८८

ராஹு தசையில் சந்த்ரனுடைய ப்ராணபுக்தி தினம் 1,
நாழி 49, விநாடி 23

तत्फलम् —

सौमनस्यं[1] सुबुद्धिश्च[2] सत्कारो गुरुदर्शनम् ।
पापभीर्तिर्मन[3]स्सौख्यं राहोः प्राणगते विधौ ॥ १८९

ராஹு தசையில் குஜபுக்தி வருஷம் 1, மீ 0, தினம் 18

तत्फलम्—

प्रच्छन्नाग्निसुसन्तप्तं गृहस्याग्निभयं ध्रुवम् ।
अन्यथा ज्वरपीडा[4] च तस्करैर्गमनं तथा ॥ १९०

कुमार्गवर्ती[5] निरतिः कुत्सित[6]जनसङ्गमः ।
स्वजनैराहृतं भीरू राहोरन्त[7]र्गते कुजे ॥ १९१

नृपाग्निचोरास्त्रभयं शरीरिणां
शरीरनाशो यदि वा महारुजा ।
पदभ्रमोऽस्रं नयनप्रपीडनं
यदा तु सर्पायुषि सञ्चरेत्कुजः[8] ॥ १९२

अन्यच्च—

पित्तदाहज्वरं छेदः[9] शूलगुल्मादिरोगतः ।
कामलं गण्डरोगश्च राहोरन्तर्गते कुजे ॥ १९३

राहोरन्तर्गते भौमे लग्नलाभत्रिकोणगे ।
केन्द्रेण शुभसंयुक्ते स्वांशे स्वक्षेत्रगेऽपि वा ॥ १९४

नष्टराज्यं धनप्राप्तिर्गृहे गोधनसंकुलम् ।
इष्टदेवप्रसादेन शुभदृष्टिसमन्विते ॥ १९५

---

1. सौनस्यं
2. सुष्ठुबुद्धिं च
3. भीर्तिमन
4. पीडां
5. वर्ति
6. कुत्सिता
7. राहारन्त
8. संचरेकुजे
9. छेदं

स्वप्रभोश्च महत्सौख्यं भूषणाश्वाम्बराप्तिकृत् ।
कुस्त्रीषु[1] चापि सन्तानं स्त्रीलाभश्च[2] शुभावहः[3] ॥ १९६

पापयुक्तेऽथवा भौमे नीचरिप्फारिषष्ठगे ।
कलहेन विचारः स्याद्दारपुत्रादिपीडनम् ॥ १९७

विदेशगमनं वापि रणशस्त्रादिपीडनम् ।
युद्धेष्वपजय[4]श्चापि धनधान्यपशुक्षयः ॥ १९८

कारागृहप्रवेशश्च[5] निगळं बन्धुनाशनम् ।
भुक्त्यादौ कष्टमाप्नोति मध्यान्ते सौख्यमाप्नुयात् ॥ १९९

शीतज्वरातिसारश्च[6] कुजभुक्तौ न संशयः ।
दायेशात्केन्द्रकोणे वा दुश्चिक्ये लाभगेऽपि वा ॥ २००

अल्पसौख्यं महालाभं राजपूजा[7] महत्सुखम् ।
कल्याणवृद्धिरैश्वर्यं भूलाभः[8] पुत्रसंभवः[9] ॥ २०१

रत्नवस्त्राश्वलाभश्च[10] प्रयाणे राजदर्शनम् ।
दायेशात् षष्ठ[11]रिप्फे वा रन्ध्रे वा पापसंयुते ॥ २०२

पुत्रदारादिनाशश्च[12] सोदराणां च पीडनम् ।
स्थानभ्रंशो[13] बन्धुवैरं दारद्वेषो[14] मनोरुजाशो[15] ॥ २०३

चोराग्निव्रणभीतिश्च देहालस्यं महद्भयम् ।
धान्यार्थपशुनाथः[16] स्याद्विदेशगमनं तथा ॥ २०४

आदौ क्लेशकरं चैव मध्यान्ते सौख्यमाप्नुयात् ।
द्वितीयद्यूननाथे वाकाले मृत्युर्न संशयः ॥ २०५

अनड्वाहं प्रकुर्वीत मृत्युञ्जयजपं चरेत् ।
सुब्रह्मण्यजपं चैव शान्तिमाप्नोत्यसंशयम्[17] ॥ २०६

---

1. कुस्त्रप्रीषु
2. लाभं च
3. सशुभावहम्
4. जयं चापि
5. प्रवेशं च
6. ज्वरातिसारं च
7. पूज्यं
8. लाभं
9. संभवम्
10. लाभं च
11. दायेशाष्षष्ठ
12. नाशं च
13. भ्रंशं
14. द्वेषं
15. रुजम्
16. नाथं
17. त्यसंशयः

ராஹு தசையில் குஜனுடைய அந்தராந்தரபுக்தி
தினம் 22, நாழி 3

तत्फलम् —

लोकोपद्रवसिद्धिश्च स्वकार्ये मतिविभ्रमः[1] ।
चित्तविभ्रान्तिदोषः स्याद्राहोरभ्यन्तरे कुजे ॥ २०७

ராஹு தசையில் குஜனுடைய ஸூக்ஷ்மபுக்தி தினம் 8,
நாழி 30, விநா 18

तत्फलम्—

दुर्जनैर्जनविद्वेषः सर्पदोषैश्च बन्धनम् ।
शौर्यशीलरतिर्हीनं राहोः सूक्ष्मगते कुजे ॥ २०८

ராஹு தசையில் குஜனுடைய ப்ராணபுக்தி தினம் 1,
நாழி 16, तत्परै 27

फलम् —

चण्डालाग्निविषाद्भीतिः स्वपदच्युतिसङ्कता ।
मलिनश्चातिवृत्तिश्च राहोः प्राणगते कुजे ॥ २०९
अन्यच्च राहुदशायां ग्रन्थान्तरे विशेषफलमुच्यते ।
मेषस्थ राहुपाके तु धनं सौख्यं श्रियं लभेत् ॥ २१०
विद्यासङ्ग्रहणं किञ्चिच्छूद्रप्रायो भवेन्नरः ।
कुजेन संयुते दृष्टे पुत्रदः पुत्रनाशनः ॥ २११
चन्द्रेण सहिते दृष्टे क्षेत्रवाहनलाभदः ।
गुरुणा संयुते दृष्टे धनदः क्षेत्रनाशकः ॥ २१२
पितुर्व्याधिपदं दद्याद्विद्यालाभं प्रयच्छति ।
शनिना संयुते दृष्टे बहुरोगधनं लभेत् ॥ २१३
वृषस्थराहुपाके तु विद्या कलह[2] एव च ।
वाक्पारुष्यमृणं[3] चापि बहुधान्यधनागमः[4] ॥ २१४
सूर्येण संयुते दृष्टे राजमूलाद्धनक्षयः ।
पुत्रहानिर्धान्यलाभं बहुकोपं लभेन्नरः ॥ २१५
चन्द्रेण संयुते दृष्टे ग्रामदेशाधिपः फणी ।
भौमेन संयुते दृष्टे रणवान् बहुदुःखवान् ॥ २१६

---

1. विभ्रमम्
2. कलहमेव च
3. वाक्पारुषऋणं
4. धनागमम्

सर्वस्वं च लयं याति नेत्रनाशो भवेत्तदा ।
बुधेन सहिते दृष्टे शत्रुमूलाद्धनक्षयः ॥ २१७

गुरुणा संयुते दृष्टे भाग्यवान् प्रियवान् भवेत् ।
गुरुणाँ सहिते राहौ पितृनाशकरस्तथा । २१८

शनिना संयुते दृष्टे बहुधान्याद्धनागमः ॥
ऋणमूलान्मानहानिर्भ्रातृ[1]वर्गविनाशकः । २१९

शुक्रेण संयुते दृष्टे बहुवित्तं लभेन्नरः ॥
स्त्रीणां विपत्तिमाप्नोति अनृतं वचनं भवेत् । २२०

युग्मस्थराहुपाके तु सर्वसौख्यधनादिदः[2] ।
रविणा संयुते दृष्टे पुत्रलाभो[3] विपत्तथा ॥ २२१

चन्द्रेण संयुते दृष्टे मातृनाशोऽथवा विपत् ।
कुजेन सहिते दृष्टे भ्रातृनाशो भवेद्ध्रुवम् ॥ २२२

जातस्य व्रणरोगोऽपि भविष्यति न संशयः ।
बुधेन सहिते दृष्टे भ्रातृलाभो विपत्तथा ॥ २२३

शत्रुबाधा व्रणं चापि भविष्यति सुनिश्चयम्[4] ।
गुरुणा संयुते दृष्टे भाग्यवान् भवति ध्रुवम् ॥ २२४

राज्यभ्रंशो[5] महद्दुःखं पितृवर्गविनाशनम् ।
शुक्रेण संयुते दृष्टे धनवान् स्त्रीविनाशकः ॥ २२५

अथवा विपदं दद्यात् स्त्रीमूलाद्व्रणवान् भवेत् ।
शनिना संयुते दृष्टे पितृनाशोऽथवा भवेत् ॥ २२६

ग्रामदेशाधिपत्यं च भ्रातृनाशो धनप्रदः ।
कर्किस्थराहुकाले तु पूर्वखण्डेऽल्पभाग्भवेत्[6] ॥ २२७

पश्चान्महाधनाढ्यः स्याद्ग्रामदेशाधिपो भवेत् ।
सूर्येण सहिते दृष्टे भ्रातृनाशो भवेद्ध्रुवम् ॥ २२८

पुत्रस्य विपदं दद्याद्विद्याकलहदो[7] भवेत् ।
चन्द्रेण संयुते दृष्टे बहुधान्यधनागमः[8] ॥ २२९

---

1. हानिभ्रातृ
2. धनन्ददः
3. लाभे
4. सुनिश्चयः
5. भ्रंशं
6. भाग्भवान्
7. विद्यात्कलहदो
8. धनागमम्

क्षीणत्वे यदि चन्द्रस्य मातुर्मरणमादिशेत् ।
कुजेन सहिते दृष्टे मातृनाशो भवेद्ध्रुवम् ॥ २३०
सर्ववित्तं लयं याति सर्वस्वमिति निश्चितम् ।
बुधेन सहिते दृष्टे शत्रुमूलाद्धनव्ययः[1] ॥ २३१
मातुर्वा विपदं दद्यात् किञ्चिद्विद्याप्रदो भवेत् ।
गुरुणा संयुते दृष्टे राजराजाधिपो भवेत् ॥ २३२
देशभ्रंशस्तथा[2] दुःखं मध्ये मध्ये लयो[3] भवेत् ।
शुक्रेण संयुते दृष्टे शूद्रस्त्रीसङ्गमो भवेत् ॥ २३३
कलत्रात्सुखनाशश्च[4] भाग्यवान् भवति ध्रुवम् ।
शनिना संयुते दृष्टे मण्डलाधिपतिर्भवेत् ॥ २३४
भ्रातृवर्गविनाशश्च पापकर्म समाचरेत् ।
जातके बलवत्त्वे च एवं भवति निश्चितम् ॥ २३५
दरिद्र[5]जातकेऽप्येवं किञ्चित्किञ्चिद्भविष्यति ।
सिंहस्थराहुदाये तु सौख्यं धान्यं धनागमः[6] ॥ २३६
बन्धनं पुत्रनाशश्च[7] बुद्धिजाड्यं भवेन्नृणाम्[8] ।
कन्यासंस्थस्य राहोस्तु पाके दुःखं विनिर्दिशेत् ॥ २३७
आप्तनाशं भयं रोगं शत्रुपीडां[9] धनक्षयम् ।
एवं पूर्वे च खण्डे स्यादन्त्ये सौख्यं धनं लभेत् ॥ २३८
मध्यदाये मध्यमं स्यादादौ दुःखं लभेन्नरः ।
तुलासंस्थस्य राहोस्तु मूत्रकृच्छ्रं मनोरुजा[10] ॥ २३९
मध्ये मध्ये धनं धान्यं कलत्रस्य च पीडनम् ।
रन्ध्रस्य राहुपाके तु देशभ्रंशो मनोरुजा[11] ॥ २४०
पित्रादिनाशनं वापि स्वयं मरणमेति च ।
चापस्थराहुकाले तु पितृनाशोऽथवा विपत् ॥ २४१
भ्रातुर्वा विपदं दद्यात् किञ्चिद्धान्यधनागमम् ।
मृगस्थराहुपाके तु कर्मसिद्धिमुपैति च ॥ २४२

---

1. व्ययम्
2. भ्रंशं तथा
3. लयं
4. नाशं च
5. दारिद्र
6. धनागमम्
7. नाशं च
8. भवेन्नरः
9. शत्रुपीडा
10. मनोरुजम्
11. भ्रंशं मनो रुजम्

पुण्यतीर्थाभिषेकं च अन्त्ये सौख्यमुपैति च ।
कुम्भस्थराहुपाके तु किञ्चिद्धान्यं धनागमम् ॥ २४३
शुक्रेण संयुते दृष्टे बहुधान्यधनागमम् ।
गुरुणा संयुते दृष्टे धननाशं तथा धनम् ॥ २४४
मीनस्थराहुपाके तु सर्वस्वं लभते क्षयम् ।
किञ्चिद्धान्यं धनं चापि बहुदुःखं लभेन्नरः ॥ २४५
एवमेव फलं नृणां राहोः पाके भविष्यति ।
भाग्यजाते भाग्यलाभो दारिद्र्ये स्वल्पभाग्यदः ॥ २४६
गुरुणा संयुते दृष्टे धनधान्यस्य कारकः ।
भाग्यराशिगते राहौ धनलाभपसंयुतः ॥ २४७
एतेषां वीक्षणाद्वापि धनधान्यस्य कारकः ।
केन्द्रात्रिकोणपतिभिः स्वोच्चस्वर्क्षगतैर्ग्रहैः[1] ॥ २४८
समन्वितौ राहुकेतू इष्टभावे च भाग्यदौ ।
अनिष्टराशिसहितौ इष्टभावपसंयुतौ ॥ २४९
इष्टेशवीक्षणाद्वापि दशान्ते च सुखप्रदौ[2] ।
बलवत्स्थानगो[3] राहुर्भाग्यकर्मेशवीक्षितः ॥ २५०
अनिष्टस्थानगो वापि दशान्ते च धनप्रदः ।
यद्यद्भावगतो राहुस्तद्भावेशः स्वनिष्टगः[4] ॥ २५१
धनधान्यविनाशं च दारिद्र्यं याति निश्चयम् ।
धनभावगते राहौ व्ययेशेन निरीक्षिते ॥ २५२
भाग्ये वा लाभराशौ वा तथा चेत्सर्वहारकः ।
धनभाग्याधिपैः साकं युक्तश्चेद्राहुरेव हि ॥ २५३
षष्ठाष्टव्ययसंस्थश्चेत्सर्वस्वं हरति ध्रुवम् ।
केतोरप्येमेव[5] स्याद्विना कर्क्यादिपञ्चकम्[6] ॥ २५४
तेषु केतोः स्वल्पफलं राहुश्चेत्सुहृदायकः[7] ।
षष्ठाष्टव्ययगो राहुकेतू[8] दुःखं तथा भयम् ॥ २५५

---

1. गतै ग्रहैः
2. प्रदः
3. बलत्वस्थानगो
4. तद्भावेशास्वनिष्टगाः
5. एवमेवं
6. स्यात् कर्क्यादिपञ्चकं विना
7. सुहृद्दायकः' इति भाव्यम्
8. राहुः केतू

धनधान्यस्य नाशं च कलहं पशुनाशनम् ।
तृतीयलाभराशिस्थे सौख्यं धान्यधनागमम् ॥ २५६
कर्क्यादिपञ्चगे लग्ने स्थितश्चेत्पञ्चदायकः ।
अन्यभावस्थितो लग्ने दुष्कीर्तिर्देहशोषणम् ॥ २५७
धनभावगतो राहुः केतुश्चेद्दारणं[1] भवेत् ।
चतुर्थे मातृनाशं च सुखं दुःखं[2] तथा धनम् ॥ २५८
पञ्चमे पुत्रनाशं च[3] सुखदुःखं तथा धनम् ।
पुत्राधिपे बलवति पुत्रलाभश्च बन्धनम् ॥ २५९
षष्ठे राहुर्व्याधिभयं दुःखपीडां[4] करोति च ।
सप्तमे[5] पुत्रनाशं च भार्यानाशं सुखं धनम् ॥ २६०
रन्ध्रस्थराहुपाके तु सर्वस्वं लभते क्षयम् ।
धर्मस्थ राहुपाके तु बन्धनं पुत्रनाशनम् ॥ २६१
किञ्चित्सौख्यं कृषेर्लाभं बली चेद्धनवान् भवेत् ।
राहुपाके कर्मसंस्थे धनवाहनलाभवान् ॥ २६२
कर्मसिद्धिमवाप्नोति शुभराशिगतो[6] यदि ।
पापराशिगतश्चेद्वा पापकर्म समाचरेत् ॥ २६३
एवमालोच्य[7] वक्तव्यं शुभाशुभफलं बुधैः ।
इति हारप्रदीपिकायां राहुमहादशानिरूपणं नाम त्रयोदशोऽध्यायः ।

## गुरुमहादशाफलम्

குருதசை வரு 16

तत्फलम् —

गुरोर्दशायां परमोच्चगस्य राज्यं महत्सौख्यमुपैति कीर्तिम् ।
मनोविलासं गजवाजिसङ्घं नृपाभिषेकं स्वकुलाधिपत्यम् ॥ १
कुळीरगस्यापि गुरोर्दशायां भाग्योत्तरं भूपतिमाननं च ।
विदेशयानं महदाधिपत्यं दुःखैः परित्यक्ततनुं मनुष्यः ॥ २
आरोहिणी देवगुरोर्महत्त्वं दशा प्रपन्ना कुरुतेऽत्र भूमिम् ।
गानाक्रियां[8] स्त्रीसुतराजपूज्यं स्वविद्यया प्राप्तयशःप्रतापम् ॥ ३

---

1. केतुश्च चेत् इति भाव्यम्
2. सुखदुःखं
3. च इति नास्ति
4. पीडा
5. सप्तमः
6. गते
7. एवमालोक्य
8. मानाक्रिया

जीवदशायामीशो ग्रामाणां मण्डलाधिनाथो वा ।
द्विजभूपलब्धधनो मेधावी कान्तिमान् विनीतश्च ॥ ४
देवेन्द्रपूज्यस्य दशावरोहे[1] करोति सौख्यं सकृदेव नाशम् ।
सकृद्यशः कान्तिविशेषजालं नरेश्वरत्वं सकृदेव याति ॥ ५
अतिनीचभावभागो गुरोर्दशायां प्रभग्नगृहपूजः ।
अन्योन्यहृदयवैरं[2] कृषिनाशं याति परिभृत्यः ॥ ६

मूलत्रिकोणनिलयस्य दशाविपाके
राज्यार्थभूमिसुतदारविशेषसौख्यम् ।
यानादिरोहणमपि स्वबलाच्च वित्तं
यज्ञादिकर्म जनपूजितपादपीठम् ॥ ७

गुरोर्दशायां स्वगृहं गतस्य राज्यार्थभूधान्यसुखाम्बरं च[3] ।
मृष्टान्नगोवाजिमनोविलासं[4] काव्यादिपुण्यागमवेदशास्त्रम् ॥ ८
गुरोर्दशायामतिशत्रुराशिं गतस्य दुःखं समुपैति शोकम् ।
विवादभूम्यर्थकलत्रपुत्रनृपाग्निचोरैर्भयमक्षिपीडाम् ॥ ९
गुरोर्दशायामरिराशिगस्य क्षेत्रादिवित्तं शयनाम्बरं च ।
नरेशसंमानमुपैति नित्यं स्त्रीपुत्रभृत्यात्मसहोदरार्तिम् ॥ १०
प्राप्तो दशायामतिमित्रराशिगतस्य जीवस्य वरेशपूज्यम् ।
मृदङ्गभेरीरवयानघोषं दिगन्तराक्रान्तसमस्तभाग्यम् ॥ ११
मित्रर्क्षगस्यापि गुरोर्दशायां सामान्यतो भूपतिदत्तभाग्यम् ।
कृष्यर्थगोभूमिमनोविलासं चित्राम्बरालङ्कृतभूषणाप्तिम् ॥ १२
नीचखेचरसंयुक्ते गुरोर्दाये मनोरुजा[5] ।
परप्रेष्यापवादं च स्त्रीपुत्राणां विरोधिता[6] ॥ १३
उच्चखेचरसंयुक्तगुरोर्दाये महत्सुखम् ।
तटाकगोपुरादीनां निर्माणं नृपपूज्यताम् ॥ १४
पापान्वितस्यापि गुरोर्दशायां करोति पापं हृदयान्तरस्थम् ।
गूढं बहिः पुण्यफलान्विशेषाद्भूम्यर्थदारात्मजमेति सौख्यम् ॥ १५
शुभान्वितस्यापि गुरोर्दशायां नरेशमानं मृदुलाम्बरं च ।
दानेन वित्तं नृपमाननाद्वा यज्ञादिसत्कर्मविशेषलाभम् ॥ १६

---

1. दशावरोहा
2. हृदयं वैरं
3. सुखाम्बरश्च
4. मलेविलासं
5. रुजम्
6. विरोधता

पापेक्षितस्यापि गुरोर्दशायां प्राप्तौ सुखं किञ्चिदुपैति सौख्यम् ।
क्वचिद्यशः कुत्रचिदात्तधैर्यं क्वचिद्धनं नाशमुपैति चान्ते ॥ १७

शुभेक्षितस्यापि गुरोर्दशायां देशान्तरे वित्तमुपैति भूपात् ।
देवार्चनं भूसुरतर्पणं च तीर्थाभिषेकं गुरुपूज्यतां च ॥ १८

केन्द्रर्क्षगजीवदाये राज्यं भूदारराजसंमानम् ।
विविधसुखानन्दकरं बहुजनरक्षां प्रधानतां याति ॥ १९

लग्नं[1] गतस्य तु दशा पुरुषं नरेशं[2] जीवस्य सौख्यममलाम्बरभूषणानि ।
यानादिरोहणमृदङ्गपणारवैश्च मत्तेभवाजिभटसङ्कयुतं करोति ॥ २०

चतुर्थकेन्द्रस्थितजीवदाये यानत्रयं भूपतिमित्रभावम् ।
भूपालयोगे यदि भूपतित्वं नो चेत्तदा तत्सदृशं करोति ॥ २१

कलत्रराशिस्थितजीवदाये दारार्थपुत्रार्थसुखं करोति ।
विदेशयानं समरे जयं च ध्यानं परब्रह्मणि पुण्यकर्म[3] ॥ २२

कर्मस्थितस्यापि गुरोर्विपाके राज्याप्तिमाहुर्मुनयस्तदानीम् ।
भूपालयोगे त्वथवात्र पुत्रकळत्रसत्कर्मसुखादियोग्यम् ॥ २३

त्रिकोणसंस्थस्य गुरोर्दशायां स्त्रीपुत्रयानार्थविवेकबुद्धिम् ।
मृद्वन्नपानाम्बरपट्टवस्त्रं यानादिलाभं नवमेशसौख्यम् ॥ २४

पञ्चमस्थगुरोर्दाये मन्त्रोपासी महत्सुखम् ।
सुताप्तिं राजपूजां[4] च वेदान्तश्रवणादिकम् ॥ २५

उच्चांशसंयुक्तगुरोर्दशायां भाग्योत्तरं राजसमानमेति ।
प्रवालमुक्तामणिरत्नलाभं सर्वेषु मुख्यं समुपैति लाभम् ॥ २६

नीचांशयुक्तस्य[5] गुरोर्विपाके भूपाद्भयं गुल्मविचर्चिकादि ।
स्थानच्युतिं बन्धुविरोधितां[6] च नृपाग्निचोरैश्च कुलोद्भवैश्च ॥ २७

अर्कजीवदशायां सहजारतो भवेत्क्षीणम् ।
ऊर्ध्वाङ्गरोमतप्तो दुश्शीलत्वं प्रभग्नसंसारः ॥ २८

आदौ गुरोर्दशाकाले नृपपूज्यं महत्सुखम् ।
मध्ये स्त्रीपुत्रलाभादि चान्ते[7] कष्टं विनिर्दिशेत् ॥ २९

धनस्य संस्थस्य गुरोर्विपाके धनायतं भूपतिमाननं वा ।
विद्याविनोदाङ्कितराजगोष्ठीं[8] सर्वोपकारं विजयं च सौख्यम् ॥ ३०

---

1. लग्न
2. नरेश
3. पुण्यकर्मा
4. पूज्यं
5. युक्त
6. विरोधतां
7. चान्त्ये
8. कोष्ठिं

नृपकृतबहुमानं भ्रातृभिर्भूमिलाभं
परयुवतिजनैर्वा दत्तगोमित्रवित्तम् ।
अशनवसनभूषागन्धमाल्याम्बराणि
परकृतमुपकारं लब्धतामेति शौर्यम् ॥ ३१

तृतीयस्य गुरोर्दाये भ्रातॄणां सुखवर्धनम् ।
नृपदत्तधनं सौख्यं गन्धमाल्याम्बरादिकम् ॥ ३२

नीरोगता पुत्रकलत्रलाभो[1] लग्नाद्रिपुस्थस्य गुरोर्दशायाम् ।
आदौ भवेदेवमथान्त्यभागे दारार्थचोराग्निभयं सरोगम् ॥
जीवस्त्वृणपदसंस्थः[2] करोति सौख्यं स्वबन्धुजनहानिं च[3] । ३३
स्थानच्युतेर्मिद(?)अन्ते[4] स्त्रीपुत्रराजदर्शनं च[5] ॥

लाभगजीवदशायां संप्राप्तौ वाहनादिमुपयाति ।
लभते विदेशयानं नानाक्लेशैश्च परिभूतः ॥ ३४

पाकस्थानबलान्वितस्य च गुरोः क्षेत्रार्थदारात्मजान्
संप्राप्नोति गजाश्ववस्त्रकनकं चित्राम्बराभूषणम् ।
दिग्वीर्यान्वितदेवनायकगुरौ लोके प्रसिद्धं तदा
जीवे कालबलाधिके नृपवधूसंमानतां[6] याति च ॥ ३५

निसर्गवीर्यान्विजीवदाये निसर्गतश्चापि सुखं महत्त्वम् ।
विद्याविलासं रतिकेळिसौख्यं गाङ्गयतोयादिकृताभिषेकम् ॥ ३६

वक्रं गतस्यापि गुरोर्दशायां महत्कृतां याति सुतार्थदारान् ।
युद्धे जयं भूपतिमित्रतां च सुगन्धमाल्याम्बरवाग्विलासम् ॥ ३७

दिग्वीर्ययुक्तस्य गुरोर्दशायां कृपाकटाक्षेण महीपतीनाम् ।
समस्तभाग्यं समुपैति नित्यं देशान्तरे भ्राम्यति किञ्चिदेव ॥ ३८

क्रूरषष्ठांशसंयुक्ते[7] गुरोर्दायेऽतिकष्टताम् ।
राजकोपावमानादि लभते नात्र संशयः ॥ ३९

सौम्यषष्ठांशयुक्तस्य[8] गुरोर्दायेऽतिसौख्यताम् ।
वाहनं बन्धुसंमानं यज्ञं वैवाहिकं शुभम् ॥ ४०

---

1. लाभं
2. जीवे ऋणपदस्थः
3. च इति नास्ति
4. मन्त्वे
5. च इति नास्ति
6. वधूस्सम्मानतां
7. षष्ठ्यंशसंयुक्ते
8. षष्ठ्यंशयुक्तस्य

पारावतांशयुक्तस्य गुरोः पाके महत्सुखम् ।
मृद्वन्नं पट्टवस्त्रं[1] च हेमविभ्रमभूषणम् ॥ ४१

पाशद्रेकाणयुक्तस्य गुरोर्दाये च बन्धनम् ।
कारागृहप्रवेशं च निगलं दारविग्रहम् ॥ ४२

उच्चस्थोऽपि गुरुर्नीचराश्यंशकसमन्वितः ।
भाग्यक्षये तु संप्राप्ते तत्क्षणादेव नश्यति ॥ ४३

नीचस्थो देवपूज्योऽपि स्वोच्चांशकसमन्वितः ।
भाग्यक्षये तु संप्राप्ते भाग्यं[2] याति तदा नरः ॥ ४४

ग्रन्थान्तरे—

मेषस्थगुरुदाये तु राजपूज्यं सुखं धनम् ।
क्षेत्रनाशं तदा दुःखं सर्वं दत्त्वा हरिष्यति ॥ ४५

वृषस्थगुरुदाये तु बहुवित्तं लभेत ना ।
धनधान्यविनाशं च बहुदुःखं पदभ्रमम् ॥ ४६

युग्मस्थगुरुदाये तु भ्रातृसौख्यं तथा विपत् ।
कृषेश्च[3] धनमाप्नोति किञ्चित्सौख्यं विनिर्दिशेत् ॥ ४७

कर्किस्थगुरुदाये तु राज्यलाभमुपैति च ।
वाहनं राजपूजां च मध्ये मध्ये लयं भवेत् ॥ ४८

सिंहस्थगुरुदाये तु पुत्रलाभं धनं लभेत् ।
विद्याजयं महाबुद्धिं करोति सुखनाशनम् ॥ ४९

कन्यासंस्थगुरोर्दाये शत्रुनाशं पितुर्विपत् ।
किञ्चिद्धनं कृषेर्लाभं विद्याजाड्यं सुतक्षयम् ॥ ५०

तौलिस्थगुरुदाये तु क्षेत्रधान्यविनाशनम् ।
स्त्रीविनाशं तथा लाभं धनसौख्यं लभेन्नरः ॥ ५१

भाग्यवान्धनवान् भोगी देशान्तरचरो भवेत् ।
गुरोर्मित्रफलं विद्यात् क्षेत्रधान्यविनाशनम् ॥ ५२

कीटस्थगुरुदाये तु भोगनाशं पितृक्षयम् ।
किञ्चिद्धान्यं धनंचापि स्थानभ्रंशं मनोरुजा ।[4] ॥ ५३

चापस्थगुरुदाये तु पुत्रलाभः[5] सुखं भवेत् ।
ग्रामदेशाधिपत्यं च मातृनाशोऽथवा विपत् ॥ ५४

---

1. पट्टुवस्त्रं
2. याग्यं
3. वृषेश्च
4. रुजम्
5. लाभं

कर्मस्थगुरुदाये तु क्षेत्रनाशः सुखक्षयः[1] ।
ग्रामदेशाधिपत्यं च किञ्चिद्भोगो[2] व्रणं भवेत् ॥ ५५
कुम्भस्थगुरुदाये तु बहुलाभो[3] बहुप्रियम् ।
भ्रातृवर्गसुखं चैव बली चेद्राजवल्लभम् ॥ ५६
मीनस्थगुरुदाये तु वाहनं लभते नरः ।
शय्याभोगं तथा सौख्यं व्रणपीडां धनक्षयम् ॥ ५७
सूर्येण सहिते जीवे राजद्वारे प्रवेशनम् ।
पुत्रलाभं धनं दद्याद्राजद्वारे जयो[4] भवेत् ॥ ५८
रविणा वीक्षिते चापि पितृपीडा[5] तथा विपत् ।
चन्द्रेण संयुते दृष्टे राजराजाधिपो भवेत् ॥ ५९
किञ्चित्क्षेत्रविनाशश्च[6] धनधान्यस्य नाशनम् ।
चन्द्रात् त्रिकोणगे वापि धनवाहनलाभकृत् ॥ ६०
कुजेन संयुते दृष्टे व्रणरोगः[7] पितुर्विपत् ।
धनलाभो[8] भवेत्किञ्चित्तत्सर्वं लयमेष्यति ॥ ६१
कुजेन यदि संदृष्टे धनधान्यविनाशनम् ।
बुधेन सहिते दृष्टे धनधान्यस्य नाशनम् ॥ ६२
पितृरोगो[9] व्याधिभयो[10] शत्रुबाधाकरो[11] भवेत् ।
भृगुणा सहिते दृष्टे बहुस्त्रीधनधान्यवान् ॥ ६३
शनिना सहिते दृष्टे ग्रामनेता भवेन्नरः ।
राहुकेतुसमेतश्चेन पितृहानिर्धनक्षयः ॥ ६४
इष्टराशिसमेतश्चेत् पापमूलात् सुखं भवेत् ।
अनिष्टराशिगे जीवे बहुदारिद्र्यवान् भवेत् ॥ ६५
ग्रहस्य स्वेन युक्तस्य अशुभस्य शुभस्य वा ।
प्राबल्यवशतो ब्रूयाच्छुभाशुभफलं सदा[12] ॥ ६६

---

1. नाशं सुखक्षयम्
2. भोगं
3. लाभं
4. जयं
5. पीडां
6. नाशं च
7. रोगं
8. लाभं
9. रोगं
10. भयं
11. बाधाकरं
12. फलं भवेत्

ग्रन्थान्तरे—

स्वाधिष्ठानं साधनाद्यैः समृद्धिं भूपैर्मित्रैर्भूसुरैर्माननं च ।
जीवः कुर्यात्स्वस्य राज्यं दशायां स्त्रीरत्नानां लाभमारोहणं च ॥ ६७

सत्कर्मेच्छां हेमरत्नाम्बराणां लाभं मित्रैः पुत्रदारैः प्रियं[1] च ।
सङ्गतिच्छां सन्ततं दर्शनेच्छां कुर्याज्जीवः स्वस्य चान्यद्दशायाम् ॥ ६८

गुरुस्तृतीये[2] कुरुते दशायां जलोत्सवान्[3] सन्ततचित्ततुष्टिम् ।
फलैश्च पुष्पैश्च तु गीतवाद्यैर्धनैश्च धान्यैश्च सुभोजनाद्यैः ॥ ६९

जीवे भोज्यं वस्त्रपुष्पादिलाभं कुर्यात्पूर्णं सूक्ष्मकालं दशायाम् ।
स्वस्त्रीसङ्गं विप्रमुख्यैश्च गोष्ठीं[4] विद्यालाभं तुष्टिवार्तां निजायाम् ॥ ७०

कुर्याज्जीवः पञ्चमायां दशायां सौधे सौख्यं वस्त्रपुष्पैः समृद्धिम् ।
भाग्यं कृषिं पुष्टिमिष्टार्थसिद्धिं धान्यं वित्तं मङ्गलं माननं च ॥ ७१

अन्यच्च—

जीवोऽङ्गना[5]गमनसत्यमुखं च सौख्यं
राजाधिराज[6]गमनागमभोगवृद्धिम ।
सर्वं च ता (?) विदितसारसमागमं च
पुत्रोद्भवो[7] गुरुदशागमने भवन्ति ॥ ७२

अभिषेकादिरैश्वर्यमायुधश्रवणं बलम् ।
अजाने (?) विजयं ब्रूयाज्जीवस्यादिदशाफलम् ॥ ७३

जीवस्य[8] दशां प्राप्य प्रशस्तवेदार्थशास्त्रपारगतः[9] ।
धर्मादिस्वर्गचित्तो प्रधानजनवल्लभोऽतिमेधावी ॥ ७४

अध्ययनदेवतार्चनमाम्नायज्ञक्रियादिभिर्वित्तम् ।
जन्मप्रभवतोऽर्थं नृपप्रसादाद्धनं लभते ॥ ७५

अश्वादिवाहनावाप्तिर्भूम्यम्बरदारपुत्रसंपत्तिः ।
सत्सङ्गतिकुशलाढ्यो बलाढ्यो वा[10] भूमिपतित्वं वा ॥ ७६

कार्येषु सूक्ष्मबुद्धिस्त्रिकालविज्ञानकर्मकुशलश्च[11] ।
प्लीहोदरगुल्माद्यैः[12] पीडां गलितोर्ध्वरोगी[13] स्यात् ॥ ७७

---

1. प्रियश्च
2. दशायां इत्यनेन लिङ्गसारूप्यं नास्ति
3. जलोत्सवा
4. गोष्ठी
5. जीवाङ्गना
6. नामभिराज
7. सुताद्भवो
8. जीवस्य च
9. पारगः
10. नलाढ्यं
11. कुशलं च
12. प्लीहाविद्रधीरगुल्माद्यै
13. अध्वरोगी

एतानि सर्वराशिषु जीवस्य दशाफलानि निर्दिश्य[1] ।
प्रत्येकं राशिफलं तस्मादूर्ध्वं समादिशेत्तज्ज्ञः ॥ ७८

ग्रन्थान्तरे—

स्वोच्चस्वक्षेत्रगे जीवे केन्द्रे वा यदि कोणगे ।
मूलत्रिकोणलाभे वा तुङ्गांशे स्वांशकेऽपि वा ॥ ७९

राज्यलाभं महत्सौख्यं देवब्राह्मणभोजनम् ।
गजवाजिसमायुक्तं राजसंमानकीर्तिदम् ॥ ८०

विदेशभाग्यलाभं च सेनापत्यं महत्सुखम् ।
दारपुत्रादिसौख्यं च वाहनाम्बरकीर्तिकृत्[2] ॥ ८१

यज्ञादिकर्मसिद्धिं च[3] पुण्यश्लोकादिकीर्तनम् ।
नटनाट्यप्रियो नित्यं वेदशास्त्रार्थपारगैः ॥ ८२

महाराजप्रसादेन इष्टसिद्धिसुखाधिकम् ।
आन्दोलिकादिलाभं च कल्याणं च महत्सुखम् ॥ ८३

देवालयतटाकादिपुण्यकर्मादिसङ्ग्रहम् ।
आरामकरणोद्युक्तः[4] अन्नदानप्रियं सुखम् ॥ ८४

नीचस्थानगते जीवे षष्ठाष्टव्ययराशिगे ।
राज्यनाशश्चार्थनाशः[5] पुत्रपीडा महद्भयम् ॥ ८५

देहपीडा मनस्तापो[6] विदेशगमनं तथा ।
चतुष्पाज्जीवहानिश्च गृहक्षेत्रादिनाशनम् ॥ ८६

दुश्चिक्ये धनगे जीवे राजसंमानमेव च ।
मित्रर्क्षे भ्रातृवर्गे च धनधान्यादिसंपदः ॥ ८७

सोदरप्रबलं सौख्यं गृहक्षेत्रादिवर्धनम् ।
व्यवसायात्फलाधिक्यं गोवाजिधनसंकुलम् ॥ ८८

सत्कीर्तिधनलाभं च गन्धमाल्यादिभूषणम् ।
शुभदृष्टियुते जीवे देशाधिक्यं महोत्सवः[7] ॥ ८९

विवाहः[8] शुभकार्याणि अग्निष्टोमादिकं फलम् ।
पापदृष्टियुते जीवे देहजाड्यं परिभ्रमः[9] ॥ ९०

---

1. निर्दिश्यम्
2. वाहनाराम्बरार्तिकृत्
3. सिद्धिश्च
4. करुणायुक्तः
5. राज्यनाशं चार्थनाशं
6. मनस्तापं
7. मनोत्सवम्
8. विवाहं
9. परिभ्रमं

हठाद्वा कुलकार्याणि कार्यविघ्नो[1] महद्भयम् ।
आदौ कष्टं भयं चैव चतुष्पाज्जीवनाशनम् ॥ ९१
मध्यान्ते सुखमाप्नोति राजसंमानवैभवम् ॥

ग्रन्थान्तरे—
जीवदशायां मेषे गणनायको ज्ञानवान्नरेन्द्रधनः ।
दारसुतमित्रभोगैः समन्वितो विगतरोगश्च ॥ ९२
वृषभाश्रितजीवदशायां प्रवर्तते रोगपीडिते दुःखी ।
अन्यत्र देशवासी स्वप्नोत्साहाद्धनं समाप्नोति ॥ ९३
मिथुनजीवदशायां स्त्रीद्वेषी वित्तवानृषिप्रायः ।
गुल्मगुणवृद्धे (?) मातुररिष्टो[2]ऽङ्गहीनो वा ॥ ९४
उच्चाश्रित[3] देवगुरोर्दशाविपाके स्वजन्मवृत्तिकरः ।
राजकुलभोगवृत्तिर्विशिष्ट[4]नामान्वितो धनी विद्वान् ॥ ९५
उच्चातिक्रान्तदशा जीवस्य सदाटनं कुदारतप्तः[5] ।
पितृमातृदुःखतप्तः पूर्वार्जितवित्त[6]विक्रयं कुरुते ॥ ९६
सिंहे जीवदशायां धर्माध्यक्षो नृपाद्धनं लभते ।
संपद्गुणातिरेको दारसुतपशुवित्तवान् भवति ॥ ९७
कन्याश्रितजीवदशायां नृपदारसमाश्रयाद्धनं लभते ।
शूद्रादिषु कलहश्च[7] प्रवर्तते स्थानसंभ्रमं कुरुते ॥ ९८
तौलिनि जीवदशायां नित्योत्साही[8] स्वदारपुत्रघ्नः ।
विदुष्टभूतार्थदेहा(?)द्दिवदिवसेऽमिताशनो भवति ॥ ९९
अळिनि तु[9] जीवदशायां सुर[10]कार्यरतोऽटनो महोत्साही[11] ।
ऋणवाननेकविभवः प्रजानुरक्तो न नियमशीलश्च ॥ १००
मूलत्रिकोणसंस्थगुरोर्दशायां[12] पित्ताधिको[13] धीमान् ।
अथाप्रवादेर्धनवान् प्रमदाविधेयोऽविनीतश्च[14] ॥ १०१

---

1. विघ्नं
2. मातुरनिष्टो
3. उच्चाश्रितो
4. राजभोगवृत्ति विशिष्टे
5. नप्तः
6. वित्रं
7. कलहः
8. मदोत्साही
9. अलिनि
10. सुरत
11. मनोत्साही
12. मूलत्रिकोणसंस्थेस्यगुरोर्दशां
13. अत्र पि इति ह्रस्वो ग्राह्यः
14. वनीतश्च

वर्गोत्तमगदशायां[1] देवाचार्यस्य पूजितो लोके ।
बहुविधसंपल्लभते सुत[2]दारसमाश्रयी कृशाङ्गी स्यात् ॥ १०२

मूढाश्रयदेवगुरोर्दशायां[3] प्रवर्तते दुःखसुखं च तुल्यम् ।
नीचारिगे तु[4] क्षयपुत्रदाराश्रित्ते च रोगा बहवश्च सन्ति[5] ॥ १०३

मूढाक्रान्तदशायां[6] देवगुरोर्वित्तवानृषिप्रायः[7] ।
बन्धु[8]जनपीडितात्मा नानानिवास[9]बहुलः स्यात् ॥ १०४

कुम्भाश्रितजीवदशा प्रवर्तते नृपधनं[10] सुखं लभते ।
देवगुरुनित्यभक्तः[11] कामातुरस्तथा महोत्साही[12] ॥ १०५

मीनदशायां च गुरोः सदाटनो विदेशवासी च[13] ।
कालान्तरे च धनवान्[14] ब्राह्मणभक्तः पशुघ्नश्च[15] ॥ १०६

प्रवालादिमहाभोग्यं पुत्रलाभं सुखावहम् ।
आरोग्यमन्नदानं च देवताग्रहवर्धनम् ॥ १०७

मतान्तरेण—

अभिषेकाद्यमैश्वर्यमायुधश्रवणं फलम् ।
अज्ञाने विजयं प्राहुर्जीवस्यान्तर्गते फलम् ॥ १०८

[illegible] 2, [illegible] 1, [illegible] 18

तत्फलम्—

धनधान्यसमृद्धिं च सर्वशत्रुक्षयं तथा ।
वश्यमीश्वरपूजां च जीवस्यान्तर्गते फलम् ॥ १०९

धनधान्यकलत्रं च विजयः[16] शत्रुषु स्वयम्[17] ।
भूलाभो[18] धनलाभश्च[19] गुरोरन्तर्गते फलम् ॥ ११०

---

1. वर्गोत्तमांशदिशां
2. स्वत
3. मूढाश्रितदेवगुरोर्दशा
4. नीचारिगेषु
5. रोगानि बहूनि
6. मूढातिक्रान्तदशा
7. ऋषिप्रियः
8. स्वबन्धु
9. नानानिवासो
10. नृपाद्धनं
11. देवगुरुभक्त
12. कामातुरो महोत्साही
13. मीनदशा प्रवर्तते सदाज्नो महाभागो विदेशवासी च
14. कालान्तरे वित्तवान्
15. ब्राह्मणभक्तिस्वदारतापशुघ्नश्च
16. विजयं
17. शत्रुमस्तथा
18. भूलाभं
19. लाभं च

ग्रन्थान्तरे—

स्वोच्चस्वक्षेत्रगे जीवे लग्नात्केन्द्रत्रिकोणगे ।
अनेकराज्याधिपत्यं[1] संपन्नो राजपूजितः ॥ १११

गोमहिष्यादिलाभश्च[2] वस्त्रवाहनभूषणम् ।
नूतनगृहनिर्माणं हर्म्यप्रासादसंयुतम् ॥ ११२

गजान्नैश्वर्य[3]संप्राप्तिर्भाग्यकर्मेशसंयुते ।
ब्राह्मणप्रभुसंमानं महाराजप्रसादतः ॥ ११३

स्वप्रभोश्च फलाधिक्यं दारपुत्रादिवर्धनम् ।
नीचांशे नीचराशिस्थे व्यये षष्ठाष्टराशिगे ॥ ११४

तद्भुक्त्यादौ राजभीतिः कलहो बन्धुवैरिणा[4] ।
राजशत्रुविरोधश्च[5] दायादिजनविड्वरम् ॥ ११५

कलहेन विचारः स्यात्स्वप्रभोश्चापमृत्युकृत् ।
विवादेन मनोदुःखं स्थानभ्रंशो[6] मनोरुजाम्[7] ॥ ११६

पुत्रदारवियोगश्च[8] धनधान्यार्थनाशनम् ।
सप्तमाधिपदोषेण अपमृत्युर्भविष्यति ॥ ११७

तद्दोषपरिहारार्थं शिवसाहस्रनामकम् ।
रुद्रजाप्यं च गोदानं[9] कारयेच्छान्तिमाप्नुयात् ॥ ११८

குருதசையில் குருவினுடைய அந்தராந்தரபுக்தி மீ 3,
தினம் 12, நாழி 24

तत्फलम्—

आरोग्यमर्चनं कान्तिः काञ्चनं राजपूजनम् ।
सौख्यं च पुत्रपौत्राणामन्तरान्तर्गते गुरौ ॥ ११९

குருதசையில் குருவினுடைய ஸூக்ஷ்மபுக்தி தினம் 13,
நாழி 39, விநாடி 12,

तत्फलम्—

मृत्युनाशो[10] धनाधिक्यमग्निहोत्रं शिवार्चनम् ।
वाहनं छत्रसंयुक्तं गुरोः सूक्ष्मदशाफलम् ॥ १२०

---

1. राज्याधिपत्यत्वं
2. लाभं च
3. गजान्तैश्वर्य
4. वैरिणम्
5. विरोधं च
6. भ्रंशं
7. रुजम्
8. वियोगं च
9. रुद्रं च उपगोदानं
10. नाशं

குருதசையில் குருவினுடைய ப்ராணபுக்தி தினம் 1,
நாழி 49, வினடி 13

तत्फलम्—

पुत्रलाभो[1] मनस्सौख्यमर्थलाभो मनःप्रियः ।
विद्याभक्तिप्रियश्चैव जीवप्राणदशाफलम् ॥ १२१

குருதசையில் சனிபுக்தி ஷூ 2, மீ 6, தினம் 12

तत्फलम्—

मन्दापहारे[2] जीवात् कृषिपशुवित्तान्वितो विरोधी स्यात् ।
स्त्रीव्यसनकर्शितात्मा प्रेष्यजनैः पीडिता'वापि ॥ १२२
ब्राह्मणैरपि सन्तप्तो[3] दुष्पुत्रेण धनापहम् ।
कर्मनाशो[4] महाक्षोभ अज्ञाने[5] धननाशनम् ॥ १२३
नृपरोधनमाश्रित्य जीवहानिः स्वपक्षयोः ।
मित्रबन्धुविरोधश्च गुरोरन्तर्गते शनौ ॥ १२४

अन्यच्च—

सञ्चितार्थानि नश्यन्ति वेश्याशत्रोरुपद्रवात्[6] ।
देशत्यागो[7] बुद्धिनाशो[8] गुरोरन्तर्गते शनौ ॥ १२५
गुरोरन्तर्गते मन्दे स्वोच्चस्वक्षेत्रमित्रगे ।
लग्नात्केन्द्रत्रिकोणे वा लाभे वा बलसंयुते ॥ १२६
राज्यलाभो[9] महत्सौख्यं वस्त्राभरणभूषणम् ।
धनधान्यादिलाभश्च स्त्रीलाभे बहुसौख्यवान् ॥ १२७
वाहनाम्बरपश्वादि[10]भूलाभः स्थानलाभकृत्[11] ।
पुत्रमित्रादिसौख्यं च नरवाहनयोगकृत् ॥ १२८
गोमहिष्यादिलाभश्च[12] गृहे लक्ष्मीकटाक्षकृत् ।
नीलवस्त्रादिलाभश्च[13] नीलाश्वालाभमेव[14] च ॥ १२९
पश्चिमां दिशमाश्रित्य प्रयाणं राजदर्शनम् ।
अनेकधनलाभं च वस्त्राभरणभूषणम् ॥ १३०

---

1. लाभं
2. रे इत्यत्र ए इति ह्रस्वो ग्राह्यः
3. सन्तप्तं
4. नाशं
5. महत्क्षोभमज्ञाने
6. उपद्रवम्
7. त्यागं
8. नाशं
9. लाभं
10. अश्वादि
11. लाभकम्
12. लाभं च
13. लाभं च
14. नालाश्वं लाभमेव च

तीर्थयात्रादिलाभं च निर्दिशेन्मन्दभुक्तिषु ।
लग्नात्षष्ठाष्टमे[1] मन्दे व्ययनीचेऽस्तगेऽपि वा ॥ १३१

धनधान्यादिनाशश्च[2] राजपीडा धनक्षयः ।
स्त्रीपीडा कलहश्चैव व्रणोष्णादिकसंभवः ॥ १३२

गृहे त्वशुभमेव स्यात्पुत्रमित्रादिपीडनम् ।
गोमहिष्यादिलाभश्च[3] पितृनाशोऽथवा विपत् ॥ १३३

सूर्येण संयुते दृष्टे पुत्रनाशोऽथवा विपत् ।
चन्द्रेण संयुते दृष्टे मातृनाशोऽथवा विपत् ॥ १३४

कुजेन सहिते दृष्टे कलही व्रणरोगवान् ।
बुधेन सहिते दृष्टे शत्रुपीडा धनक्षयः[4] ॥ १३५

भृगुणा संयुते दृष्टे स्त्रीनाशो निर्धनस्तथा[5] ।
राहुणा संयुते दृष्टे बहुधान्यधनागमः ॥ १३६

केतोरप्येवमेव स्याद्राहोस्त्वेवं विशेषतः ।
मेषकर्किवृषभस्य राशिगो रिप्फरन्ध्रव्रगभावतो[6]ऽन्यभे ॥ १३७

राजराजसदृशो महाप्रभुः एतदेव वनितां गतोऽपि वा ।
एतत्फलं समग्रं स्याद्भाग्यजातो भवेद्यदि ॥ १३८

दारिद्र्ये स्वल्पफलदो जातकानुगुणं भवेत् ।
एतान् राशीन् विना केतो राहुवत् कथयेद्बुधः ॥ १३९

केतोः स्वल्पफलं ब्रूयात् कष्टजातोऽतिकष्टदः ।
षष्ठाष्टमव्यये राहुर्दुःखदः कलहप्रदः ॥ १४०

लग्नाधिपेन संयुक्तो[7] देहकार्श्यं धनं लभेत् ।
वित्ताधिपेन संयुक्त ऋणदो धनदश्च सः[8] ॥ १४१

तृतीयाधिपयुक्तश्चेद्भ्रातृनाशं कृषिं लभेत् ।
क्षेत्राधिपेन संयुक्तः सौख्यं मातृविनाशनम् ॥ १४२

पुत्राधिपेन संयुक्तः पुत्रनाशस्तथा सुखम् ।
षष्ठाधिपेन संयुक्तो व्रणदश्च दरिद्रदः[9] ॥ १४३

---

1. लग्नाष्षष्ठाष्टमे
2. नाशं च
3. लाभं च
4. क्षयम्
5. नाशो धनस्तथा
6. व्र इत्यस्मिन् परेऽपि न्ध्र इति ह्रस्वो ग्राह्यः
7. संयुक्तम्
8. दः
9. दारिद्र्यद इति यावत्

सप्तमाधिपसंयुक्तः सुखदः स्त्रीविनाशकः ।
रन्ध्राधिपेन संयुक्तो भाग्यघ्नो व्रणकारकः ॥ १४४
भाग्याधिपेन संयुक्ते[1] पितृनाशोऽथवा विपत् ।
किञ्चिद्धनं कृषेर्लाभं गुरोर्वापि पदं लभेत् ॥ १४५
कर्माधिपेन संयुक्ते[2] भाग्यवान् भवति ध्रुवम् ।
लाभाधिपेन संयुक्ते[3] धनधान्यस्य लाभवान् ॥ १४६
व्ययाधिपेन संयुक्ते[4] बहुदुःखं लभेन्नरः ।
एतेषां वीक्षणाद्वापि एवमेव फलं लभेत् ॥ १४७
केतोरप्येवमेव[5] स्यादिति शास्त्रस्य निर्णयः ।
धनभावगतो मन्दो लाभपेन समन्वितः ॥ १४८
भाग्याधिपेन वा युक्तः स्वल्पलाभो[6] भविष्यति ।
दायेशात्केन्द्रकोणे वा राजपीडा धनव्ययः ॥ १४९
[7]बन्धुद्वेषो महाभीतिर्हृद्रोगः सर्वहानिकृत् ।
दायेशात् केन्द्रकोणस्थे लाभे वा धनलाभकृत् ॥ १५०
भूलाभश्चार्थलाभश्च[8] पुत्रलाभो[9] महत्सुखम् ।
गोमहिष्यादिलाभश्च[10] अश्वमूल्यधनप्रदः ॥ १५१
दायेशाद्रिपुरन्ध्रस्थे व्यये वा पापसंयुते ।
धनधान्यादिनाशश्च[11] बुद्धिपुत्रविरोधिकृत् ॥ १५२
[12]उद्योगभङ्गो देहार्तिः स्वजनानां महद्भयम् ।
द्विसप्तमाधिपे मन्दे अपमृत्युभयं भवेत् ॥ १५३
तद्दोषपरिहारार्थं विष्णुसाहस्रकं जपेत् ।
आयुःप्रदं कृष्णमन्त्रं जपेच्छान्तिर्भविष्यति ॥ १५४
कृष्णां गां महिषीं दद्याद्दानेनारोग्यमादिशेत् ।

குருதசையில் சனியினுடைய அந்தராந்தரபுக்தி மீ 4,
தினம் 24, நாழி 24

तत्फलम्—

कुत्सितं सर्वकार्येषु भिन्नतेजःपराभवः ।
परकार्यप्रवृत्तिश्च गुरोरन्तर्गते शनौ ॥ १५५

---

1. संयुक्तो
2. संयुक्तो
3. संयुक्तो
4. संयुक्तो
5. एवमेवं
6. लाभं
7. बन्धुद्वेषे महान् भीति
8. भूलाभं चार्थलाभं च
9. पुत्रलाभं
10. लाभं च
11. नाशं च
12. उद्योगभङ्गं देहार्तिं

குருதசையில் சனியினுடைய ஸூக்ஷ்மபுக்தி தினம் 16,
நாழி 12, விநா 48

तत्फलम्—

ब्रह्महा ग्रामवर्ती च विदेशाद्वस्तुनाशनम् ।
उत्क्रोशाद्धान्यनाशश्च गुरोः सूक्ष्मगते शनौ ॥ १५६

குருதசையில் சனியினுடைய ப்ராணபுக்தி தினம் 2,
நாழி 9, விநாடி 41

तत्फलम् —

नष्टेन्द्रियप्ररोगश्च[1] देशान्तरपरिभ्रमः ।
बन्धुवित्तविनाशश्च[2] गुरोः प्राणगते शनौ ॥ १५७

குருதசையில் புதாபஹாரபலம் வரு 2, மா 3, தினம் 6

तत्फलम्—

जीवाद् बुधापहारे धर्मविरुद्धोऽश्रुतो[3] विदेशरतः ।
मन्दोत्साही चपलो अतिप्रमादी विवादी च ॥ १५८
वैश्यवर्गाद्धनप्राप्तिः क्षत्रियैरपि पूजनम् ।
अन्नदानेन सन्तुष्टिर्ब्राह्मणैरपि पूजनम् ॥ १५९
कुसुमं शयनं वस्त्रं पुत्रस्य क्षेत्रसंभवम् ।
विवाहाद्बन्धुकल्याणं गुरोरन्तर्गते बुधे ॥ १६०

अन्यच्च—

द्विण्णाशो रोगशमनं धनधान्यविवर्धनम् ।
सर्वप्रियमवाप्नोति गुरोरन्तर्गते बुधे ॥ १६१

ग्रन्थान्तरे—

जीवस्यान्तर्गते सौम्ये केन्द्रलाभत्रिकोणगे ।
स्वोच्चगे[5] स्वर्क्षगे वापि दशाधिपसमन्विते ॥ १६२
अर्थलाभो[6] देहसौख्यं राज्यलाभो[7] महत्सुखम् ।
महाराजप्रसादेन इष्टसिद्धिः सुखाधिकम्[8] ॥ १६३

---

1. प्ररोगी च
2. विनाशं च
3. विरुद्धाश्रुतो
4. द्विण्णाशं
5. स्वोच्चेव
6. लाभं
7. लाभं
8. इष्टसिद्धिसुखादिकम्

वाहनाम्बरपश्वादि गृहे गोधनसंकुलम् ।
भूम्यात्मजेन सन्दृष्टे शत्रुवृद्धिः सुखं क्षयः[1] ॥ १६४
व्यवसायात्फलं नष्टं ज्वरातीसारमेव च ।
गुह्यरोगभयं चैव कुजयुक्ते न संशयः ॥ १६५
तुङ्गांशे स्वांशके वापि योगकारकसंयुते ।
नष्टराज्यं धनप्राप्तिर्बन्धु[2]कल्याणसंभ्रमः ॥ १६६
विवाहोत्सवकार्याणि गृहे लक्ष्मीकटाक्षकृत् ।
पश्चिमां दिशमाश्रित्य प्रयाणं राजदर्शनम् ॥ १६७
यत्नकार्यार्थसिद्धिः स्यात्सन्देशं पुनरेष्यति ।
दायेशात्केन्द्रकोणे वा तुङ्गे वा तुङ्गभांशके ॥ १६८
स्वदेशे धनलाभश्च पितृमातृसुखावहः ।
गजवाजिसमायुक्तो राजमात्रप्रसादकः ॥ १६९
दायेशात् षष्ठरन्ध्रे[3] वा व्यये वा पापसंयुते ।
शुभदृष्टिविहीनश्चेद्धनधान्यपरिच्युतिः ॥ १७०
विदेशगमनं चैव मार्गे चोरभयं तथा ।
व्रणदाहार्तिरोगश्च पापयुक्ते तु नीचगे ॥ १७१
लग्नात् षष्ठाष्टरिष्फे वा रन्ध्रे वा पापसंयुते ।
अकस्मात्कलहश्चैव[4] गृहे निष्ठुरभाषणम् ॥ १७२
चतुष्पाज्जीवहानिश्च [5]व्यवहारस्तथैव च ।
अपमृत्युभयं चैव शत्रूणां कलहो[6] भवेत् ॥ १७३
शुभदृष्टे शुभैर्युक्ते दारसौख्यं धनागमः[7] ।
आदौ शुभकरं चैव मध्ये सौख्यं विनिर्दिशेत् ॥ १७४
अन्ते[8] तु धनहानिश्च स्वल्पसौख्यं तु जायते ।
द्वितीयद्यूननाथे वा अपमृत्युर्भविष्यति ॥ १७५
तद्दोषपरिहारार्थं विष्णुसाहस्रकं जपेत् ।
बुधप्रीतिकरीं चैव[9] शान्तिं कुर्याद्यथाविधि ॥
आयुर्वृद्धिकरं चैव सर्वसौभाग्यसंपदम ॥ १७६

---

1. वृद्धिसुखं क्षयम्
2. प्राप्तिबन्धु
3. दायेशाष्षष्ठरन्ध्रे
4. कलहं नैव
5. व्यवहारं तथैव
6. कलहं
7. धनागमम्
8. अन्त्ये
9. करं चैव

குருதசையில் புதனுடைய அந்தராந்தரபுக்தி மீ 3,
தினம் 25, நாழி 36

तत्फलम्—

विदेशाद्वाहनप्राप्तिर्विवाहो[1] मौञ्जिबन्धनम् ।
क्रयविक्रयकं चैव गुरोरभ्यन्तरे बुधे ॥ १७७

குருதசையில் புதனுடைய ஸூக்ஷ்மபுக்தி தினம் 14,
நாழி 0, விநா 24

तत्फलम्

ज्ञानं विभवपाण्डित्यं शास्त्राभ्यासः[2] शिवार्चनम् ।
अग्निहोत्ररतिश्चैव गुरोः सूक्ष्मगते बुधे ॥ १७८

குருதசையில் புதனுடைய ப்ராணபுக்தி தினம் 1,
நாழி 56, விநா 2

तत्फलम् —

वाहनं बन्धुसंपत्तिः कीर्तिः सौभाग्यमेव[3] च ।
साहसात्कार्यसिद्धिः स्याद् गुरोः प्राणगते बुधे ॥ १७९

குருதசையில் கேதுபுக்தி மீ 11, தினம் 6

तत्फलम्—

प्रवालं मौक्तिकं लब्धं वस्त्रलाभः शुभावहः[4] ।
पितृवर्गे धनप्राप्तिस्तीर्थलाभसमन्विता[5] ॥ १८०
विषोत्पत्तिर्विषेणापि धनधान्यप्रजाक्षयः[6] ।
सर्वत्र कार्यहानिः स्याद्गुरोरन्तर्गते ध्वजे ॥ १८१
भुजविच्छेदविन्यासं प्राहुर्मानविवर्जिताः[7] ।
दारिद्र्यं लभते नित्यं गुरोः केतुर्यथा यथा ॥ १८२

अन्यच्च—

जीवस्यान्तर्गते केतौ शुभग्रहसमन्विते ।
अल्पसौख्यं धनावाप्तिः[8] कुत्सितान्नं च भोजनम् ॥ १८३

---

1. विवाहं
2. शास्त्राभ्यासं
3. संपत्तिकीर्तिसौभाग्यमेव
4. लाभं शुभावहम्
5. समन्वितः
6. क्षयम्
7. विवर्जितः
8. धनावाप्तिं

वातपित्तादिकं चैव ज्वरातीसारमेव च ।
राजानुग्रहशान्तिश्च शुभयुक्ते ध्वजेऽपि वा ॥ १८४
पापयुक्तेऽथवा दृष्टे षष्ठाष्टव्ययराशिगे ।
दारपुत्रविहीनश्च चोराग्निनृपपीडनम् ॥ १८५
राजकोपो[1] धनच्छेदो[2] बन्धनं रोगपीडनम् ।
बलहीनपितृद्वेषो[3] भ्रातृद्वेषो[4] मनोरुजम् ॥ १८६
अशुभं च मनःक्लेशमनुजस्य विनाशनम् ।
द्वितीयद्यूनराशिस्थे देहबाधा भविष्यति ॥ १८७
दारेण मृत्युमाप्नोति शान्तिं कुर्याद्विचक्षणः ।
छागदानं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ १८८

குருதசையில் கேதுவினுடைய அந்தராந்தரபுக்தி
தினம் 19, நாழி 36

फलम्—
विदेशात्कलहोत्पत्तिर्वैषम्यं बन्धुनाशनम् ।
देवब्राह्मणविद्वेषो गुरोरभ्यन्तरे ध्वजे ॥ १८९

குருதசையில் கேதுவினுடைய ஸூக்ஷ்மபுக்தி
தினம் 1, நாழி 18

फलम्—
वाहनं वस्तुनाशश्च[5] नृपभीतिर्गुरुक्षयः[6] ।
शिवालयविघातश्च[7] गुरोः सूक्ष्मगते ध्वजे ॥ १९०

குருதசையில் கேதுவினுடைய ப்ராணபுக்தி நாழி 47

फलम्—
व्याधिभीर्मूलतो हानिर्बन्धुभ्रमणविच्युतिः ।
देशत्यागो नृपाद्भीतिः गुरोः प्राणगते ध्वजे ॥ १९१

குருதசையில் சுக்ரபுக்தி வரு 2, மீ 8

तत्फलम्—
शुक्रान्तराले जीवाद्वा वातरोग[8]गुल्मान्वितोऽपि ।
स्याद्धर्मयोस्त्वभीष्टो विद्याद्वस्त्रान्नसंग्रहशीलः ॥ १९२

---

1. कोपं
2. छेदं
3. द्वेषं
4. द्वेषं
5. नाशं च
6. भीतिं गुरुक्षयम्
7. विघातं च
8. वातरोगी
छन्दो विकलम् । प्रथमपादे ल्लं इति लघुर्ग्राह्यः ।

वाहनादिधनावाप्तिं[1] गजवाजिसमन्विताम्[2] ।
छत्रचामरसंबन्धं स्त्रीगोष्ठीं च समादिशेत् ॥ १९३
अभिषेकादिसंपत्तिर्लोके प्रख्यातकीर्तिमान् ।
देवब्राह्मणभक्तिश्च गुरोरन्तर्गते भृगौ ॥ १९४

किञ्च—
जीवस्यान्तर्गते शुक्रे भाग्यकेन्द्रे च संयुते ।
लाभे वा शुभराशिस्थे स्वक्षेत्रशुभसंयुते ॥ १९५
नरवाहनयोगश्च गजाश्वाम्बरगोकुलम् ।
महाराजप्रसादेन दशाधिक्यं महत्सुखम् ॥ १९६
यवनप्रभुसंमानं समानप्रभुदर्शनम् ।
पीताम्बरादिवस्त्राणि लाभश्चैव[3] भविष्यति ॥ १९७
उत्तरां दिशमाश्रित्य प्रयाणं राजदर्शनम् ।
कल्याणं च महाप्रीतिः पितृमातृसुखावहा[4] ॥ १९८
देवतागुरुभक्तिश्च शिवपूजार्चनं तथा[5] ।
षष्ठाष्टमव्यये नीचे भृगुदायेऽतिकष्टदः ॥ १९९
कलहं बन्धुवैषम्यं दारपीडा महद्भयम् ।
मन्दारराहुसंबन्धे कलहो[6] राजविड्वरम् ॥ २००
कारागृहं[7] च निगलं बन्धनं रोगपीडनम् ।
स्त्रीमूलात्कलहश्चैव[8] श्वशुरात्कलहस्तथा[9] ॥ २०१
सोदरेण विवादश्च धनधान्यपरिभ्रमः[10] ।
दायेशात् कोणगे शुक्रे केन्द्रलाभे धनेश्वरे ॥ २०२
धनधान्यादिलाभश्च[11] स्त्रीलाभो राजदर्शनम् ।
वाहनं पुत्रलाभश्च[12] पशुवृद्धिर्महत्सुखम् ॥ २०३
[13]गजाश्वैश्वर्यमाप्नोति शुक्रे बलसमन्विते ।
दायेशाद्व्ययगे षष्ठे रन्ध्रे नीचास्तगेऽपि वा ॥ २०४

---

1. धनावाप्तिः
2. समन्वितः
3. लाभं चैव
4. सुखावहः
5. पूजार्चनस्तथा
6. कलहं
7. गृहश्च
8. कलहं चैव
9. कलहं तथा
10. परिभ्रमम्
11. लाभं च
12. लाभं च
13. गजान्तैश्वर्य

स्त्रीनाशो[1] बन्धुकलहो[2] विरोधो[3] मूत्रकृच्छ्रकृत् ।
पुत्रक्लेशो[4] व्याधिपीडा धननाशो[5] महद्भयम् ॥ २०५
द्विसप्तमाधिपे शुक्रे तदीशाभ्यां युतेक्षिते ।
अपमृत्युभयं तस्य स्त्रीमूलादौषधादिभिः ॥ २०६
तस्य रोगस्य शान्त्यर्थं महाशान्तिं समाचरेत् ।
महादेवीजपं चैव गोदानं शान्तिमाप्नुयात् ॥ २०७

குருதசையில் சுக்ரனுடைய அந்தராந்தரபுக்தி மீ 5,
தினம் 10

फलम्—
गन्धकर्पूरकस्तूरिमृगनाभिविलेपनम् ।
त्यागभोगरतिर्नित्यं[6] गुरोरभ्यन्तरे भृगौ ॥ २०८

குருதசையில் சுக்ரனுடைய ஸூக்ஷ்மபுக்தி தினம் 26,
நாழி 40

फलम्—
प्ररोगान्मुच्यते रोगी धनवान् बहु[7]गायकः ।
पुत्रदारादिसौख्यं च गुरोः सूक्ष्मगते भृगौ ॥ २०९

குருதசையில் சுக்ரனுடைய ப்ராணபுக்தி தினம் 3,
நாழி 45

फलम् —
वस्त्रान्नधनसिद्धिः स्यान्मित्रबन्धुसमागमः ।
कल्याणं कान्तिरुत्पत्तिर्गुरोः[8] प्राणगते भृगौ ॥ २१०

குருதசையில் ரவிபுக்தி மீ 9, தினம் 18

तत्फलम्—
जीवदशायां भानोरन्तरकाले[9] सुतार्थभोगरतः ।
ख्यातो विशिष्टनामा[10] लोकसभापूजितोऽतिमान्यश्च ॥ २११
राजप्रीतिर्महाभोगः[11] पित्रादिधनवर्धनम् ।
पुत्रैरार्जितसद्द्रव्यं विप्रैरपि सुपूजनम् ॥ २१२

---

1. नाशं
2. कलहं
3. विरोधं
4. क्लेशं
5. नाशं
6. रतिं नित्यं
7. पायकः
8. उत्पत्तिं गुरोः
9. भानोरन्तरान्तरकाले
10. विशिष्टनामो
11. राजप्रसादं महाभोगं

वञ्चनं जनवैषम्यं परसेवाप्रवर्तकम्[1] ।
क्वचित् स्वकार्यनाशश्च[2] गुरोरन्तर्गते रवौ ॥ २१३
राजादिकलहः[3] पीडा ज्वरदुःखं तथैव च ।
व्याधिभिर्मरणात्क्लेशः[4] स्थानभ्रंशो[5] दरिद्रता[6] ॥
गुरोर्महादशामध्ये रवेरन्तर्गते[7] यथा ॥ २१४

ग्रन्थान्तरे—

जीवस्यान्तर्गते सूर्ये स्वोच्चस्वक्षेत्रगेऽपि वा ।
केन्द्रे वाथ त्रिकोणे वा दुश्चिक्ये लाभगेऽपि वा ॥ २१५
तत्काले धनलाभः[8] स्याद्राजसंमानवैभवम् ।
वाहनाम्बरपश्वादिभूषणं पुत्रसंभवः[9] ॥ २१६
मित्रप्रभुवशादिष्टं सर्वकार्यं शुभावहम् ।
षष्ठाष्टमव्यये सूर्ये नीचे वा पापसंयुते ॥ २१७
शिरोरोगादिपीडाद्या ज्वरपीडा तथैव च ।
सत्कर्मत्वविहीनत्वं पापकर्मरतः सदा ॥ २१८
सर्वत्र जनविद्वेषो[10] बन्धनं कार्यनाशनम् ।
अकस्मात्कलहश्चैव[11] जीवस्यान्तर्गते रवौ ॥ २१९
दायेशात्केन्द्रकोणे वा दुश्चिक्ये लाभगेऽपि वा ।
धनलाभश्चार्थलाभः[12] पुत्रलाभस्तथैव[13] च ॥ २२०
मनोवाक्चिन्तितं कार्यं स्वकल्याण[14]महोत्सवः ।
देहपीडा च मध्यान्ते आदौ सौख्यमवाप्नुयात् ॥ २२१
उत्साहं बन्धुकल्याणं गृहे लक्ष्मीकटाक्षकृत् ।
दायेशाद्रिपुरन्ध्रस्थे व्यये वा पापसंयुते ॥ २२२
करोति स्वकुलाचारं हीनं धान्यार्थनाशनम् ।
समानशोकसन्तापं दारक्लेशं महद्भयम् ॥ २२३

---

1. प्रवर्तकः
2. नाशं च
3. कलहं
4. क्लेशं
5. स्थानभ्रष्टं
6. दरिद्रतः
7. रविरन्तर्गते
8. लाभं
9. संभवम्
10. विद्वेषं
11. कलहं चैव
12. धनलाभं चार्थलाभं
13. पुत्रलाभं स्तथैव
14. कार्ये...कल्याण

शुभयुक्ते शुभैर्दृष्टे महत्सौख्यं धनागमः[1] ।
देशग्रामाधिपत्यं च यशः कीर्तिः प्रतापवान् ॥ २२४

सुखभोजनमुल्लासमिक्षुदण्डाज्यशर्करा ।
द्वितीयद्यूननाथे तु अपमृत्युस्तदाश्रितः[2] ॥
तद्दोषपरिहारार्थं सूर्यप्रीतिं च कारयेत् ॥ २२५

குருதசையில் ரவியினுடைய அந்தராந்தரபுக்தி
தினம் 14, நாழி 24

फलम्—

रोगादिपरिभूतिश्च वृद्धस्त्रीपरिसेवनम् ।
वन्दितः पुत्रदाराद्यैर्गुरोरन्तर्गते रवौ ॥ २२६

குருதசையில் ரவியினுடைய ஸூக்ஷ்மபுக்தி நாழி 45

फलम्—

वातपित्तप्रकोपश्च [3]श्लेष्मोद्वेगस्तथैव च ।
अन्नादिदोषशीलः स्याद् गुरोः सूक्ष्मगते रवौ ॥ २२७

குருதசையில் ரவியினுடைய ப்ராணபுக்தி விநாடி 7

फलम्—

ज्वरादिमरणं चैव [5]पुत्रार्थो [4]व्याकुलो भवेत् ।
शरीरतापदोषश्च[6] गुरोः प्राणगते रवौ ॥ २२८

குருதசையில் சந்த்ரபுக்தி வரு 1, மீ 4

तत्फलम्—

जीवाच्चन्द्रविभागे बहुदारसमन्वितो धनी विद्वान् ।
नृपदयितो विख्यातो गतार्थलाभो महोत्साही ॥
महालक्ष्मीकटाक्षं च सत्सुहृद्भिः समं तथा ॥ २२९

अन्यच्च—

स्त्रीविनाशो[7] भयं चैव नृपपूजा [8]सुतागमः ।
सर्वप्रियमवाप्नोति गुरोरन्तर्गते [9]विधौ ॥ २३०

---

1. धनागमम्  4. पुत्रार्थे  7. विनाशं
2. तथाश्रितः  5. व्याकुलं  8. सुतागमं
3. श्लेष्मोद्देह  6. दोषं च  9. शशी

ग्रन्थान्तरे—

जीवस्यान्तर्गते चन्द्रे केन्द्रलाभत्रिकोणगे ।
स्वोच्चे वा स्वक्षेराशिस्थे पूर्णचन्द्रदलैर्युते ॥ २३१

राज्यलाभो[1] यशोवृद्धिः सुखवाहनभूषणम् ।
दारपुत्रादिसौख्यं च क्षीरान्नं राजपूजनम् ॥ २३२

सत्कर्म च महत्सौख्यं राजसंमानसंभ्रमः[2] ।
गृहे शुभकरं चैव पुत्रलाभः[3] सुशोभनम् ॥ २३३

[4]गजाश्वैश्वर्यभाग्यं च सेनाधिक्यं महत्सुखम् ।
अनेकराजसंमानं पुत्रपौत्रादिवर्धनम् ॥ २३४

दक्षिणां दिशमाश्रित्य प्रयाणं राजदर्शनम् ।
महाराजप्रसादेन इष्टसिद्धिसुखादिकम् ॥ २३५

षष्ठाष्टमव्यये चन्द्रे क्षीणे वा पापसंयुते ।
दायेशात्षष्ठरन्ध्रे वा व्यये वा बलवर्जिते ॥ २३६

[5]मानार्थी बन्धुमरणं निगलं पदविच्युतिः[6] ।
नृपचोराग्निपीडा च विदेशगमनं तथा ॥ २३७

मूत्रकृच्छ्रातिसारश्च शीतज्वरभयाधिकम् ।
अर्थहानिर्यशोहानिर्नृपक्रोधस्तथैव [7]च ॥ २३८

दायेशाद्भाग्यकोणे वा केन्द्रे वा शुभसंयुते ।
लग्नाधिपेन संबद्धे[8] वाहनाधिपसंयुते ॥ २३९

उत्साही बन्धुरैश्वर्यं लक्ष्मीसान्निध्यमाप्नुयात् ।
मणिविद्रुममुक्तादिकाञ्चनाद्यम्बराणि च ॥ २४०

देशाधिपत्यं मन्त्रित्वं लभते नात्र संशयः ।
द्वितीयसप्तमाधीशे[9] देहबाधा भविष्यति ॥ २४१

तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ।
आयुरारोग्यवृद्धिश्च सौख्य[10]संपत्प्रदायकम् ॥ २४२

---

1. लाभं
2. संभ्रमम्
3. लाभं
4. गजान्तैश्वर्य
5. मानार्थे
6. विच्युतिम्
7. क्रोधं तथैव च
8. संबन्धे
9. सप्तमाधीशो
10. सोख्य

குருதசையில் சந்த்ரனுடைய அந்தராந்தரபுக்தி மீ 1, தினம் 10

तत्फलम्—

भूतोपद्रवसंसर्गं भूषणैर्व्याधिभिर्विना ।
नित्यमूर्जितभक्तिश्च गुरोरभ्यन्तरे विधौ ॥ २४३

குருதசையில் சந்த்ரனுடைய ஸூக்ஷ்மபுக்தி தினம் 3, நாழி 20

तत्फलम्—

छत्रचामरसंयुक्तो वैभवं पुत्रसंभवः[1] ।
स्त्रीसुखं मृत्युनाशश्च[2] गुरोः सूक्ष्मगते विधौ ॥ २४४

குருதசையில் சந்த்ரனுடைய ப்ராணபுக்தி நாழி 16

तत्फलम्—

वस्त्रान्नधनसिद्धिः स्यान्मित्रबन्धुसमागमः ।
कल्याणं कान्तिरुत्पत्तिर्गुरोः प्राणगते विधौ[1] ॥ २४५

குருதசையில் குஜாபஹாரம் மீ 11, தினம் 6

तत्फलम्—

जीवात्कुजापहारे मस्तकरोगी गुदाक्षिरोगी स्यात् ।
विप्रेभ्योऽन्नप्रदानं[4] च शुचित्वं ब्राह्मणप्रियम् ॥ २४६
भूमौ सञ्चितलाभश्च[5] सुस्थिरं भूमिलाभदम्[6] ।
कुसङ्गी कुत्सिततनुः कुमार्गी दीर्घरोगवान् ॥
स्थाननीचोद्भवावाप्तिर्जीवस्यान्तर्गते कुजे ॥ २४७

अन्यच्च—

बाहु[7]प्रतोषणमरिव्रजतोऽर्थलाभः[8]
सुक्षेत्रसत्कृतिरिह प्रथितप्रभावः ।
ईषद्गुणान्वितनिरीक्षण[9]सुक्षितिर्वा
क्षित्यात्मजे हरति वत्सरमात्मजाते ॥ २४८

---

1. संभवम्
2. नाशं च
3. शशी
4. अन्नदानं
5. लाभं च
6. भूमिलापदम्
7. बहु
8. लाभं
9. ईषद्गुणानिरीक्षण

अन्यच्च—

स्त्रीरोषं रोगकोपं च व्याजं शस्त्रान्महद्भयम्[1] ।
अधिचोरमवाप्नोति गुरोरन्तर्गते कुजे ॥ २४९

ग्रन्थान्तरे—

जीवस्यान्तर्गते भौमे लग्नात्केन्द्रत्रिकोणगे ।
स्वोच्चस्वक्षेत्रगे वापि दुश्चिक्ये धनगेऽपि वा ॥ २५०
विद्याविवाहकार्याणि बृहत्क्षेत्रादिसंपदः ।
समरे राजसंमानं सौख्यं च नृपमाननम् ॥ २५१
दायेशात्केन्द्रभाग्यस्थे त्रिकोणे लाभगे तथा ।
शुभैर्युक्ते शुभैर्दृष्टे धनधान्यादिसंपदम् ॥ २५२
मृष्टान्नपानविभवं राजप्रीतिकरं शुभम् ।
युद्धयात्राप्रसङ्गं[2] च जयापजयमाप्नुयात् ॥ २५३
उत्तरां दिशमाश्रित्य प्रयाणं राजदर्शनम् ।
स्त्रीसौख्यं च सुतावाप्तिं पुण्यतीर्थफलप्रदम् ॥ २५४
दायेशात् षष्ठरन्ध्रे वा व्यये वा नीचसंस्थिते ।
पापयुक्तेक्षिते वापि धान्यार्थगृहनाशनम् ॥ २५५
विषभीतिभयं दुःखं नेत्ररोगो[3] धनक्षयः[4] ।
पूर्वार्धे क्लेशमित्याहुरपरार्धे महत्सुखम् ॥ २५६
समरे राजसंमानं बन्धुसौख्यं धनागमः[5] ।
द्वितीयद्यूननाथे तु देहजाड्यं मनोरुजा[6] ॥
अनड्वाहं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ २५७

குருதசையில் குஜனுடைய அந்தராந்தரபுக்தி
தினம் 19, நாழி 36

तत्फलम्—

बृहत्सेवा[7] विवाहादेः खननात् पादभञ्जनम्[8] ।
शस्त्रदोषो[9] मदार्तिश्च गुरोरभ्यन्तरे कुजे ॥ २५८

---

1. शस्त्रमहाद्भयम्
2. प्रसङ्गश्च
3. रोगं
4. क्षयम्
5. धनागमम्
6. रुजम्
7. बृहत्सेवाद्विवाहादात्
8. पादभञ्जदा
9. दोषं

குருதசையில் குஜனுடைய ஸூக்ஷ்மபுக்தி நாழி 54

तत्फलम्—

स्त्रीजनाश्च विशेषार्तिर्बन्धनं[1] गृहबाधनम् ।
देशान्तरगता प्राप्तिर्गुरोः सूक्ष्मगते कुजे ॥ २५९

குருதசையில் குஜனுடைய ப்ராணபுக்தி நாழி 3,
விநாடி 30

तत्फलम्—

वातनाशः[2] कार्यलाभः[3] सर्वधर्मपरिष्कृतः[4] ।
सागराद्वस्तुलाभश्च[5] गुरोः प्राणगते कुजे ॥ २६०

குருதசையில் ராஹுபுக்தி வருஷம் 2,
மீ 4, தினம் 24

कृष्णधान्येन संयुक्तो[6] नीलवस्त्रैः सुपूजितः[7] ।
जागरः[8] कर्मनाशश्च[9] ज्वरदाहो[10] महद्भयम् ॥ २६१
दन्तरोगो[11] महत्कारं (?) चिकित्सेन धनावहम् ।
चण्डा च वृत्तिः सततं लोके गर्हितवाक्यवान् ॥
सर्वेषां विप्रियो मुख्यो गुरोरन्तर्गतेऽप्यहौ ॥ २६२

अन्यच्च—

बन्धूपतप्तरुरुमानसरुद्ददार्तिं
चोराद्भयं करगतो ज्वरतोऽथ वा[12] स्यात् ।
राजादिपीडनमरिव्यसनं सुहानिः
संपत्स्यते हरति जीवदशासु[13] राहोः[14] ॥ २६३
रक्तपित्तोष्णरोगं च विषादिज्वरमेव च ।
शस्त्रेण भयमाप्नोति गुरोरन्तर्गतेऽप्यहौ ॥ २६४

---

1. विशेषार्तिबन्धनं
2. नाशं
3. लाभं
4. परिष्कृता
5. लाभं च
6. संयुक्तं
7. पूजितम्
8. जागरं
9. नाशं च
10. दाहं
11. दन्तरोगं
12. ज्वरतोय वा
13. हरति (सौरि) जीव
14. राहौ

अन्यच्च—

जीवस्यान्तर्गते राहौ स्वोच्चे वा केन्द्रगेऽपि वा ।
मूलत्रिकोणभाग्येशकेन्द्राधिपसमन्विते ॥ २६५
शुभयुक्तेक्षिते वापि योगप्राबल्यमादिशेत् ।
भुक्त्यादौ बहुमानं च धनधान्यपरिश्रमम् ॥ २६६
राजानुग्रहशान्तिं च[1] स्वल्पग्रामाधिपत्यताम् ।
विदेशराजसंमानं यवनप्रभुदर्शनम् ॥ २६७
अश्वान्दोल्यादिलाभं च[2] बहुसेनाधिपत्यताम् ।
गृहे कल्याणसंपत्तिं[3] पुत्रमित्रसुखास्थिताम्[4] ॥ २६८
दूरयात्राभिगमनं पुण्ययात्रादिसङ्ग्रहम् ।
सेतुस्नानफलप्राप्तिरिष्टसिद्धिः सुखावहा[5] ॥ २६९
दायेशात् षष्ठरन्ध्रे वा व्यये वा पापसंयुते ।
सोदरेण विरोधः स्याद्विषशस्त्राग्निपीडनम् ॥ २७०
अशुभं गृहकर्माणि दुस्स्वप्नादिभयं ध्रुवम् ।
अकस्मात् कलहश्चैव[6] क्षुद्रशून्यादिरोगकृत् ॥ २७१
द्विसप्तमस्थिते राहौ[7] देहबाधां विनिर्दिशेत् ।
तद्दोषपरिहारार्थं छागदानं च कारयेत् ॥
देहबाधाद्विनिर्गत्य[8] सौख्यं स्याद्धनसंपदः[9] ॥ २७२

குருதசையில் ராஹுவினுடைய அந்தராந்தரபுக்தி
மீ 4, நாள் 9, நாழி 36

तत्फलम्—

बृहद्द्वेषी धनद्वेषी देवताविभवच्युतः[10] ।
जनभङ्गपराशश्च गुरोरभ्यन्तरेऽप्यहौ ॥ २७३

குருதசையில் ராஹுவினுடைய ஸூக்ஷ்மபுக்தி
தினம் 15, நாழி 21 விநாடி 36

फलम् —

मातापितृविनाशश्च[11] सर्वनाश[12]स्तथैव च ।
चोरादिविषभीतिश्च गुरोः सूक्ष्मगतेऽप्यहौ ॥ २७४

---

1. शान्तिश्च
2. लाभश्च
3. संपत्तिः
4. स्थितम्
5. प्राप्तिः इष्टसिद्धः सुखावहम्
6. अकस्मात् कलहं चैव
7. राहुः
8. देहबाधाया विनिर्गत्य इति भवेत्
9. संपदम्
10. विभवश्चदा
11. विनाशं च
12. नाशं तथैव

குருதசையில் ராஹுவினுடைய ப்ராணபுக்தி தினம் 2,
நாழி 2, விநாடி 2

फलम् —

व्याधिभिः परिभूतः स्याच्चोरैरपि हृतं धनम् ।
सर्पादिविषभीतिः स्याद् गुरोः प्राणगतेऽप्यहौ ॥ २७५

## अथ शनिमहादशा प्रोच्यते

சனிதசை வருஷம் 19

तत्फलम् —

मन्ददशायां प्राप्य प्रथितो धीमाननेकशास्त्रज्ञः ।
ब्रह्मज्ञानपुराणे नेता[1] पित्राधिको विधिज्ञश्च ॥ १
गजनरवाहनाद्यैः संपन्नो ज्ञानतो धनप्राप्तिः ।
द्विजदेवपूजितात्मा पुराणभवनाश्रितोऽल्पवस्तुसन्तुष्टः ॥ २
निद्रालस्यश्रमवान् स्वजनद्वेष्यो जराङ्गनासक्तः ।
धर्मप्रियो विनीतो देवाराधन[2]स्वार्चनाभिरतः[3] ॥ ३
वातकफाद्यैः पीडा विकलाङ्गो जायते कृशाङ्गो वा ।
सामान्यमेतदुक्तं राशिप्रत्येकमंशकान् वक्ष्ये ॥ ४

अन्यच्च—

मन्दात्युच्चदशायां ग्रामसभामण्डलाधिपत्यं स्यात् ।
लभते त्रिनोदशीलं पितृनाशं बन्धुकलहं च ॥ ५
स्वोच्चदशायां कुरुते देशभ्रंशं मनोरुजं दुःखम् ।
वाणिज्यहानिः कृषिसत्त्वनाशं नृपाद्विरोधं नृपकोपनं च ॥ ६
आरोहिणीवासरनाथसूनोर्दशाविपाके नृपलब्धभाग्यम् ।
वाणिज्यलाभं[4] कृषिभूमिलाभं गोवाजियानं सुतदारलाभम् ॥ ७
दिनेशसूनोस्त्ववरोहकाले[5] राज्यच्युतिं दारसुतार्थनाशम् ।
भाग्यक्षयं भूपतिकोपयुक्तं प्रेष्यत्वमायाति गुदाक्षिरोगम् ॥ ८
नीचस्थितस्यापि दिनेशसूनोर्दाये कलत्रात्मजसोदराणाम् ।
नाशं महत्कष्टतरं कृषेश्च नीचानुवृत्त्या समुपैति वृत्तिम् ॥ ९

---

1. पुराणनेता
2. देवताराधनपीडां
3. अत्र स्व इत्यस्य पूर्वमपि न इति ह्रस्वो ग्राह्यः
4. वाणिज्यलाभं
5. सूनोत्वपरोहकाले

मूलत्रिकोणनिलयस्य शनेर्दशायां देशान्तरादिवनवासमुपैति काले ।
नामद्वयं यदि सभानगराधिपत्यं विद्वेषणं सुतकलत्रसुखादिभिर्वा ॥ १०

स्वक्षेत्रगस्य च दशा दिवसेशसूनो-
द्वेषं करोति बलपौरुषकीर्तिजालम् ।
राजाश्रयं कनकभूषणमृत्युलाभं
धैर्यं स्वनामानुगुणं च कीर्तिम् ॥ ११

शनेर्दशायामतिशत्रुगस्य स्थानच्युतिं बन्धुविरोधनं च ।
चोराग्निभीतिं भय[1]मन्नविघ्नं भृत्यार्थदारात्मजकोपमेति ॥ १२

दिनेशसूनोस्त्वरिराशिगस्य वैश्याद्धनं प्राप्य च भूमिनाशम् ।
कृषेर्विनाशं स्वपदच्युतिं च वैरं समायाति शरीरकृच्छ्रम् ॥ १३

मित्रक्षेत्रदशायां मन्दस्य तु शिल्पकर्मगुणोत्तरम् ।
अज्ञानं बलतापं[2] तातादि[3]दुःखमहत्त्वं च ॥ १४

[4]सौरिरतिमित्रदाये ददाति सौख्यं नरेशसंमानम् ।
सुतधनदाराविशेषात्पशुकृषिमहिषादिवाणिज्यम् ॥ १५

समर्क्षगस्यापि शनेर्दशायां समानबुद्धिः सुतदारामित्रे ।
भृत्यार्जनं बन्धुजनेषु वैरं देहस्य कार्श्यं क्षयपित्तवातैः ॥ १६

नीचखेचरसंयुक्तशनेर्दाये महद्भयम् ।
[5]विप्रलम्भोपवासं च नीचवृत्त्यनुजीवनम् ॥ १७

स्वोच्चगोचरसंयुक्तशनेर्दाये महत्सुखम् ।
किञ्चिद्राज्यं कृषेर्लाभं भृत्यवर्गार्थनाशनम् ॥ १८

पापान्वितस्यापि शनेर्दशायां पापानि गूढानि करोति काले ।
नीचस्त्रियः संगमनं विशेषाच्चोराग्निनीचैः कलहं विदारः ॥ १९

शुभान्वितस्यापि शनेर्दशायां विशेषतो ज्ञानमुपैति काले ।
परोपकारं नृपलब्धभाग्यं कृष्णानि धान्यानि च भूमिलाभम् ॥ २०

पापेक्षितस्यापि शनेर्दशायां भूसार्थदारात्मजसोदराणाम् ।
नाशं समायाति परापवादं [6]कुभोजनं कुत्सितगन्धमाल्यम् ॥ २१

शुभेक्षितस्यापि शनेर्दशायां स्त्रीपुत्रभृत्यार्थमुपैति काले ।
पश्चादुपैत्यत्र महच्च कष्टं गोभूमिवाणिज्यकृषेर्विनाशम् ॥ २२

---

1. भीतिभय
2. बलप्रतापं
3. तादाति
4. अतिमित्रदाये इत्येव
5. विप्रलम्भोपवासं
6. कुभोजितम्

केन्द्रान्वितशनेर्दाये कलहायासपीडनम् ।
पुत्रमित्रार्थदारादिबन्धूनां मरणं ध्रुवम् ॥ २३

लग्नगस्य शनेर्दाये देहकृच्छ्रमुपैति च ।
स्थानच्युतिं प्रवासं च राजकोपं शिरोरुजम् ॥ २४

चतुर्थे च शनेर्दाये मातृवर्गविनाशनम् ।
गृहदाहं पदभ्रंशं चोराग्निनृपपीडनम् ॥ २५

दारराशिगतस्यापि शनेर्दायेऽरिपीडनम् ।
मूत्रकृच्छ्रं महद्द्वेषं स्त्रीहेतोर्मरणं[1] तथा ॥ २६

दशमस्थशनेर्दाये कर्मनाशमुपैति च ।
देशान्तरं पदभ्रंशं निगलं राजपीडनम् ॥ २७

[2]द्वितीयगशनेर्दाये वित्तनाशमथोऽक्षिरुक्[3] ।
राजकोपं मनस्तापमन्नद्वेषं मनोरुजम् ॥ २८

तृतीयस्थशनेर्दाये कृषिगोधनसंपदः ।
मनोजाड्यं [4]महोत्साहं भ्रातृवर्गविनाशनम् ॥ २९

पञ्चमस्थशनेर्दाये पुत्रनाशं मनोरुजम् ।
राजकोपं भृत्यनाशं बन्धुस्त्रीचित्तविभ्रमम् ॥ ३०

षष्ठस्थरविसूनोस्तु दशाकालेऽरिपीडनम् ।
व्याधिचोरविषैर्बाधा[5] गृहक्षेत्रविनाशनम् ॥ ३१

मरणपदस्थो मन्दः करोति नित्यं सुतार्थदाराणाम् ।
नाशं भृत्यजनानां गोमहिषभूमिदारनाशं च[6] ॥ ३२

नवमगतमन्ददाये पित्रोर्नाशो[7] गुरोस्तथैव[8] स्यात् ।
लभते विदेशयानं [9]निजकुलजातैर्विनाशमुपयाति ॥ ३३

लाभगमन्ददशायां लभते भीतिविविधार्थसौख्यसंमानम् ।
सुतदारभृत्यसौख्यं मनोविलासं कृषेश्च[10] लब्धधनः ॥ ३४

व्ययगतमन्ददशायां चोराग्निभूपसंवै[11]....... ।
[12]विविधपदमपि च दुःखं विदेशयानं च[13] बन्धुनाशं च ॥ ३५

---

1. मरणं तु च
2. शनिर्दाये
3. रुत्
4. मनोत्साहं
5. विषैर्बाधां
6. च इति नास्ति
7. नाशं
8. स्यात् इति नास्ति
9. स्वकुल
10. कृषेर्लब्धधनम्
11. ग्रन्थस्त्रुटितः
12. विविधपदं च
13. च इति नास्ति

अर्कगमन्ददशायां स्वजनद्वेष्यं परस्त्रियं लभते ।
भृत्यापत्यविरोधं [1]माहोद्यं दोषपरिभूतिम् ॥ ३६

नीचांशमन्ददाये नीचाचारेण जीवनं लभते ।
सर्वेषां प्रेष्यत्वं धनसुतदारैश्च विग्रहं दुःखम् ॥ ३७

उच्चांशमन्ददशायां विविधसुखानन्दभोगभाग्यादीन् ।
विदेशयानं ग्रामसभामण्डलाधिपत्यं वा ॥ ३८

[2]आदौ शनेर्दशायामतिकष्टं भ्रातृनाशमपि कुरुते[3] ।
मध्ये विदेशयानं[4] परगृहवासः [5]परान्नभोगश्च ॥ ३९

स्थानवीर्ययुतमन्ददयायां दानपुत्रधनकीर्तिमुपैति ।
चोरशत्रुनृपवह्निभयं वा बन्धुनाशमथवाक्षि[6]गुदार्तिम् ॥ ४०

मन्दस्य दिग्वीर्ययुतस्य दाये
दिगन्तरोदान्तसुखार्तकीर्तिम् ।
भूभृत्यदारात्मजसोदराणां
विनाशनं बन्धुजनैर्विरोधम् ॥ ४१

कालवीर्ययुतमन्ददशायां कालकूटविषभीतिमुपैति ।
दारपुत्रनृपचोरभयं वा धान्यभूमिकृषिवाहनलाभम् ॥ ४२

वक्रचारयुतो मन्दः करोति विफलक्रियाम् ।
उद्योगभङ्गदुःखं च सोदरार्थविनाशनम् ॥ ४३

क्रूर[7]षष्ठांशसंयुक्तः शनेर्दाये महद्भयम् ।
नृपकोपं पदभ्रंशं कारागृहनिवेशनम् ॥ ४४

सौम्य[8]षष्ठांशसंयुक्तः शनेर्दाये महत्सुखम् ।
दारपुत्रार्थसंपत्तिं[9] लभते बन्धुविग्रहम् ॥ ४५

[10]वैशेषिकांशसंयुक्तः शनिः सौख्यं करोति च ।
विशेषाद्राजसंमानं विचित्राम्बरभूषणम् ॥ ४६

क्रूरद्रेक्काणसंयुक्तशनेर्दाये महद्भयम् ।
उद्बन्धनं विषाद्भीतिं[11] नृपचोराग्निजं भयम् ॥ ४७

---

1. महोद्यं
2. आदौ इति नास्ति
3. भ्रातृनाशं कुरुते
4. पिरिग्रहवासं
5. परान्नं च भुङ्क्ते
6. अथाक्षि
7. षष्ठयश
8. षष्ठ्यंश
9. संपात्तैः
10. वैशेषिकांशगतः
11. भीतिः

नीचराशिगतो मन्दः स्वोच्चांशकसमन्वितः ।
दशादौ दुःखमाप्नोति दशान्ते त्वतिसौख्यदः ॥ ४८

उच्चराशिगतो मन्दो नीचांशकसमन्वितः ।
दशादौ दुःखमाप्नोति दशान्ते कष्टदो भवेत् ॥ ४९

होराप्रदीपिकायाम्—

मेषस्थमन्ददाये तु [1]प्रवासो वातपीडनम् ।
चर्मरोगो[2] बन्धुहानिपतनं क्षेत्रनाशनम् ॥ ५०

एवमादौ दशान्ते तु बहुलाभः[3] सुखं तथा ।
देशग्रामाधिपत्यं च कृष्णधान्यं धनागमः[4] ॥ ५१

वृषस्थमन्ददाये तु बहुधान्यधनागमः[5] ।
राज्यलाभो[6] वणिक्कर्म धर्मकर्ता भवेन्नरः ॥ ५२

युग्मस्थमन्ददाये तु कृपिलाभं धनागमम् ।
भ्रातृनाशं पुत्रनाशं स्वयं वा विपदं लभेत् ॥ ५३

कर्किस्थमन्ददाये तु मातृवर्गविपत्तथा ।
देशग्रामाधिपत्यं च [7]वातरोगश्च बन्धनम् ॥ ५४

सिंहस्थशनिदाये तु पितृनाशोऽथवा विपत् ।
देशग्रामाधिपत्यं च बन्धनं स्त्रीमृतिर्भवेत् ॥ ५५

कन्यासंस्थशनेर्दाये क्षेत्रनाशो[8] धनक्षयः ।
शत्रुबाधाव्रणं चापि भ्रातृवर्गविनाशनम् ॥ ५६

तौलिस्थमन्ददाये तु मण्डलाधिपतिर्भवेत् ।
[9]द्रव्यचोरो वातरोगी पितृमातृविनाशनम् ॥ ५७

[10]कीटगमन्ददशायां व्रणवानृणवांश्च [11]भिक्षुकोऽपि भवेत् ।
देशभ्रंशं लभते सुखसुतनाशं तथाक्षिरोगं च ॥ ५८

चापस्थमन्ददाये तु बहुभाग्यं तथा व्रणः ।
पितृहानिर्भ्रातृहानिरादौ बन्धनमेव च ॥ ५९

---

1. प्रवासं
2. रोगं
3. लाभं
4. धनागमम्
5. धनागमम्
6. लाभं
7. वात रोग च
8. नाशं
9. द्रव्यश्चारी
10. कीटक
11. भिक्षुको भवेत्

नक्रगमन्ददशायां बहुवित्तार्तिं विनिर्दिशेद्धीमान् ।
[1]ग्रामपुरनगरनेता खण्डे पूर्वे [2]तथा मनोदुःखम् ॥ ६०

कुम्भगमन्ददशायां पुत्रविपत्तिं तथा व्रणं चापि ।
[3]बहुधनलाभश्च तथा गोमहिषाश्वादिवित्तवान् भवति ॥ ६१

मत्स्यगतमन्ददशायां देशभ्रंशः[4] पितृविपच्चापि ।
भिक्षुक एव स नूनं क्षेत्रविनाशस्तथाक्षिरोगं च[5] ॥ ६२

## ॥ संयुतमन्दफलम् ॥

सूर्येण संयुते मन्दे बहुभाग्यं सुतक्षयः[6] ।
सूर्यात्सप्तायवाहेषु स्थितश्चेत्सुतनाशकः[7] ॥ ६३

सूर्येण यदि सन्दृष्टो भाग्यकारक एव सः ।
चन्द्रेण संयुते दृष्टे गृहवाहनलाभवान् ॥ ६४

चन्द्रात्सप्तायवाहेषु स्थितश्चेन्मातृनाशनः ।
क्षेत्रवाहनलाभादि भवत्येव बली यदि[8] ॥ ६५

कुजेन संयुते दृष्टे किञ्चित्क्षेत्रस्य लाभवान् ।
व्रणरोगश्च[9] दारिद्र्यं वातरोगी[10] भवेन्नरः ॥ ६६

बुधेन संयुते मन्दे भ्रातृनाशोऽथवा विपत् ।
व्रणरोगः[11] शत्रुभयं दरिद्रो भवति ध्रुवम् ॥ ६७

गुरुणा संयुते मन्दे पूर्वपक्षे विनाशनम् ।
पशुधान्यविनाशं[12] च पश्चाद्वित्तं सुखं भवेत् ॥ ६८

गुरोस्त्रिकोणगे[13] वापि एवमेव फलं लभेत् ।
जीवात्सप्तायवाहेषु स्थितश्चेत्पितृनाशकः ॥ ६९

पुत्रस्य विपदं कुर्यात् सौख्यकारक एव सः ।
भृगुणा संयुते दृष्टे बहुवित्तं लभेन्नरः ॥ ७०

---

1. पुराणनगर
2. तया
3. बहुधनलाभम् इत्येव वर्तते
4. भ्रंशं
5. विनाशं तथाक्षिरोगं च
6. क्षयम
7. नायकः
8. बलिर्यदि
9. रोगं च
10. रोगो
11. रोगं
12. धान्यं विनाशं
13. त्रिकोणभे

देशग्रामाधिपत्यं च बहुस्त्रीवल्लभो भवेत् ।
शुक्रात्सप्तायत्राहेषु स्थितश्चेत् स्त्रीविनाशकः ॥
राहुकेतुसमेतश्चेच्चोराद्वित्तविनाशनम्[1] ॥　　७१

पन्थान्तरे—

मिथ्यापवादविधबन्धुरनर्थहानि-
र्मित्रेषु बान्धवजनेषु च युद्धबुद्धिः ।
सिद्धिं च कार्यमपियन्ति सदापि नष्टं
सूर्यात्मजस्य च दशागमने भवन्ति ॥　　७२

वाताद्रोगं बन्धनं बन्धुनाशं स्वस्त्रीमित्रैः खेदनं[2] सार्वकालम् ।
देशत्यागं स्थाननाशं च कुर्यान्मन्दो दीक्षां [3]स्वे दशाब्दे च रोगम् ॥७३
मन्दस्य स्वान्तर्दशायां विवादं भृत्यैर्मित्रैर्वादनं देहपीडाम् ।
दद्याद्दैन्यं[4] गोगजाश्वादिनाशं तापं युद्धं स्थाननिद्रां करोति ॥　　७४
शनिस्तृतीये[5] कुरुते दशायां शरीरनाशं दृशि रुक् शिरोरुजम् ।
यात्राविरोधं प्रभुसेवकैश्च वृथाविवादं मनसोऽपि निद्राम् ॥　　७५
मन्दो दद्यात्सूक्ष्मकायां दशायां गण्डोच्छूलं कामिलाद्यैः प्रपीडाम् ।
स्थानभ्रंशं सर्वदा बुद्धिमान्द्यं स्त्रीपुत्राद्यैः खेदनं भूमिनाशम् ॥　　७६

अन्यच्च—

जळत्यळानि (?) स्याद्राजकोपो धनक्षयः ।
मातृनाशो मनोदुःखं सौरस्याद्दशाफलम् ॥　　७७

पन्थातरे भृगुः—

स्वोच्चस्वक्षेत्रगे मन्दे मित्रक्षेत्रेऽथवा यदि ।
मूलत्रिकोणकोणे वा तुङ्गांशे स्वांशकेऽपि वा ॥　　७८
दुश्चिक्ये लाभगे वापि राजसंमानवैभवम् ।
सत्कीर्तिं धनलाभं च विद्यालाभं महत्सुखम् ।　　७९
महाराजप्रसादेन गजवाहनभूषणम् ।
राजयोगं प्रकुर्वीत सेनाधिक्यं महत्सुखम् ॥　　८०
लक्ष्मीकटाक्षचिह्नानि राज्यलाभं करोति च ।
गृहे कल्याणसंपत्तिं गृहक्षेत्रादिवृद्धिदः ॥　　८१

---

1. वित्तं विनाशनम्
2. मित्रीखेदनं
3. स्वदशाब्दे
4. दद्याद्यनं
5. अत्र लिङ्गव्यत्ययः

षष्ठाष्टमव्यये मन्दे नीचे वास्तंगतेऽपि वा ।
विषशस्त्राग्निभीतिश्च स्थानभ्रंशो[1] महद्भयम् ॥ ८२
पितृमातृविनाशश्च[2] धनधान्यपरिभ्रम [3] ।
आप्तबन्धुविरोधश्च[4] दारपुत्रादिपीडनम् ॥ ८३
राजवैषम्यकार्याणि निगळं बन्धनं तथा ।
शुभयुक्तेक्षिते मन्दे योगे वा कारकैर्युते ॥ ८४
केन्द्रत्रिकोणलाभे वा कोदण्डे मीनगे शनौ ।
राज्यलाभं महोत्साहं पुत्रदारादिसंपदम् ॥ ८५
राजयोगं प्रकुर्वीत विशेषधनलाभकृत् ।
राज्यं करोति भूपत्वं सभामण्डलनायकम् ॥
वाहनच्छत्रसंयुक्तं[5] गजाश्वाम्बरसंकुलम् ॥ ८६

சனிதசையில் சனிபுக்தி வருடம் 3, மாதம் 0, தினம் 3,

फलम्—

मन्ददशायां मेषे [6]प्रवासनिरतः स्वतन्त्रश्च ।
पामादिचर्मरोगी मायावी भ्रातृबन्धुरहितश्च ॥ ८७
धान्यक्रि[7]यानवाप्तिर्नीचाद्भ्रष्टस्य रविपुत्रदशायाम् ।
रवितनयदशायां राष्ट्रपीडामहारप्रतिजनितविभूतिप्रेष्यवृद्धाङ्गनाप्तिः ॥
पशुमहिषवृषाप्तिः पुत्रदारप्रपीडा[8] भव(?)[9]कफगदार्तिः पादहस्ताङ्गताप ॥

अन्यच्च—

बाधिर्यं मानहानिः स्यान्मद्यपानरतिः सदा ।
वंशहानिर्यशोदुःखं सौरस्यान्तर्दशाफलम् ॥ ८९

ग्रन्थान्तरे—

मूलत्रिकोणस्वर्क्षे वा [10]तुलायामुच्चगेऽपि वा ।
केन्द्रत्रिकोणलाभे वा राजयोगादिसंयुते ॥ ९०

---

1. भ्रंशं
2. विनाशं च
3. परिभ्रमम्
4. विरोधं च
5. संयुक्तो
6. प्रवस
7. पामादि
8. क्रियान्यावाप्तिः
9. पीडां
10. अत्र गकाक्षरस्य लोपः
11. तुलया

राज्यलाभो[1] महत्सौख्यं दारपुत्रादिवर्धनम् ।
वाहनच्छत्रसंयुक्तं गजाश्वाम्बरसंकुलम् ॥ ९१

महाराजप्रसादेन अश्वान्दोल्यादिलाभकृत् ।
षष्ठाष्टमव्यये मन्दे नीचे वा पापसंयुते ॥ ९२

तद्भुक्त्यादौ राजभीतिर्विषशस्त्राग्निपीडनम् ।
रक्तस्रावो[2] गुल्मरोगो[3] निगळं बन्धनं तथा ॥ ९३

मध्ये चोराग्निभीतिश्च देशत्यागो[4] मनोरुजा[5] ।
अन्त्ये शुभकरं चैव राजप्रीतिकरं शुभम् ॥ ९४

रन्ध्रनाथयुते नैव अपमृत्युर्भविष्यति ।
तद्दोषपरिहारार्थं मृत्युञ्जयजपं चरेत् ॥
कृष्णां गां महिषीं दद्याद्दानेनारोग्यमादिशेत् ॥ ९५

*சனிதசையில் சனியினுடைய அந்தராந்தரபுக்தி மீ 5, தினம் 21, நாழி 28, விநாடி 30*

फलम्—

देशत्यागो मृगाद्भीतिः कुक्षिरोगो धनक्षयः ।
अग्निना दहनं कुष्ठमन्तरान्तर्गते शनौ ॥ ९६

*சனிதசையில் சனியினுடைய ஸூக்ஷ்மபுக்தி தினம் 27, நாழி 12, விநாடி 28*

फलम्—

दारनाशो महाव्याधिः शत्रुपीडाक्षिरोगकृत् ।
भिक्षाचारमनोदुःखं सौरेः सूक्ष्मदशाफलम् ॥ ९७

*சனிதசையில் சனியினுடைய ப்ராணபுக்தி தினம் 4, நாழி 18, விநாடி 33*

फलम्—

ज्वरातिसारतापश्च कुष्ठरोगो[6] जले मृतिः ।
इति सर्वसमासेन सौरेः प्राणदशाफलम् ॥ ९८

---

1. लाभं
2. स्रावं
3. रोगं
4. त्यागं
5. रुजम्
6. रोगं

சனிதசையில் புதபுக்தி வரு 2, மீ 8, தினம் 9

फलम्—

सुभगत्वमस्ति रहिता वनिता स्वजनपालनं[1] विजयमित्रयुतः[2] ।
त्रिगदोद्भवः सहजपुत्ररुजा शनिदायहारिणि[3] शशाङ्कसुते ॥ ९९

अन्यच्च—

स्वक्षेत्रं वाजिलाभश्च[4] विभवो धान्यसंभवः ।
गुरुशिष्यैश्च संपन्नः शनेरन्तर्गते बुधे ॥ १००

ग्रन्थान्तरे—

मन्दस्यान्तर्गते सौम्ये त्रिकोणे केन्द्रगेऽपि वा ।
लाभे वा धनसंस्थे तु स्वोच्चस्वक्षेत्रगेऽपि वा ॥ १०१
संमानं च महत्कीर्तिर्विद्यालाभो धनागमः ।
स्वराज्यं परराज्यं च [5]वाहानामधिपः सुखी ॥ १०२
यज्ञादिकर्मसिद्धिश्च[6] राजयोगादिसंभवः[7] ।
देहसौख्यं महोत्साहो[8] गृहे लक्ष्मीकटाक्षकृत् ॥ १०३
सेतुस्नानफलप्राप्तिस्तीर्थयात्रादिसिद्धिदम् ।
वाणिज्यं धनलाभश्च[9] गृहे कल्याणसंभ्रमः[10] ॥ १०४
पुराणपुण्यश्रवणं देवताराधनप्रियम् ।
अन्नदानफलं चैव पुत्रपौत्रादिवर्धनम् ॥ १०५
षष्ठाष्टमव्यये सौम्ये नीचे वास्तंगतेऽपि वा[11] ।
रव्यारफणिसंयुक्ते पापयुक्ते धनक्षयम्[12] ॥ १०६
देहपीडां[13] मनस्तापं व्याकुलं च महद्भयम् ।
हितशत्रुत्वकार्याणि युद्धयात्रां विनिर्दिशेत् ॥ १०७
दायेशात्केन्द्रकोणे वा लाभे वा शुभसंयुते ।
देहारोग्यं महत्सौख्यं विद्यालाभो[14] धनागमः[15] ॥ १०८

---

1. पालनं
2. मित्रयुवतिः
3. हारिणी
4. लाभं च
5. वाहना
6. सिद्धिं च
7. संभवम्
8. महोत्साहं
9. लाभं च
10. संभ्रमम्
11. गते यदि
12. क्षयः
13. पीडा
14. लाभं
15. धनागमम्

नृपाभिषेकमर्थाप्तिर्देशग्रामाधिपत्यता[1] ।
फलमीदृशमादौ तु भुक्त्यन्ते रोगपीडनम् ॥ १०९

परापवादो[2] बन्धूनां विरोधो[3] धननाशनम् ।
दायेशात्षष्ठरन्ध्रे वा व्यये वा बलवर्जिते ॥ ११०

भुक्त्यादौ शुभमारोग्यं वाहनाम्बरभूषणम् ।
सद्व्ययं धर्मवृद्धिश्च[4] सत्कीर्तिर्धनसंपदः[5] ॥ १११

द्वितीयद्यूननाथे तु अपमृत्युभयं भवेत् ।
तद्दोषपरिहारार्थं विष्णुसाहस्रकं जपेत् ॥
मृत्युञ्जयजपं कुर्यात्सर्वसंपत्प्रदायकम् ॥ ११२

சனிதசையில் புதனுடைய அந்தராந்தரபுக்தி மீ 4,
தினம் 17, நாழி 16, விநாடி 30

तःफलम् —

सज्जनानुगतश्चैव दारपुत्रार्थसञ्चयः ।
वातपित्तविनाशश्च[6] शनेरभ्यन्तरे बुधे ॥ ११३

சனிதசையில் புதனுடைய ஸூக்ஷ்மபுக்தி தினம் 24,
நாழி 27, விநாடி 1

फलम् —

वाणिज्यं भूमिलाभश्च[7] विद्यालाभो[8] धनागमः[9] ।
विवाहो[10] बन्धुकल्याणं शनेः सूक्ष्मगते बुधे ॥ ११४

சனிதசையில் புதனுடைய ப்ராணபுக்தி தினம் 3, நாழி 51,
விநாடி 21

फलम् —

मङ्गलं हेमलाभश्च[11] पुत्री स्याद्राजपूजनम् ।
दिनमैश्वर्यसंपत्तिः शनिप्राणगते बुधे ॥ ॥ ११५

---

1. पत्यताम्
2. परापवादं
3. विरोधं
4. वृद्धिं च
5. संपदम्
6. विनाशं च
7. लाभं च
8. लाभं
9. धनागग:
10. विवाहं
11. लाभं च

சனிதசையில் கேதுபுக்தி வரு 1, மீ 1, தினம் 9

फलम् —

अशिक्षितमहद्रक्षो[1] देवतालयशिक्षयः (?) । ११६
देवब्राह्मविरोधश्च[2] शनेरन्तर्गते ध्वजे ॥

किञ्च—

मरुदग्निपीडनमरिव्यसनं सुतदारनिग्रहं धियि स्वपतनम् ।
अशुभावलोकमहेश्च भयं शनिवत्सराहृति (?) च केतुपतौ ॥ ११७

अन्यच्च— भृगुः—

शनेरन्तर्गते केतौ शुभदृष्टियुतेक्षिते ।
स्वोच्चे वा शुभराशिस्थे योगकारकसंयुते ॥ ११८
धनपेन समायुक्ते धनधान्यादिलाभकृत् ।
पुण्यतीर्थफलप्राप्तिः सेतुस्नानादिकं फलम् ॥ ११९
मार्गे किञ्चिद्रणभयं पुत्रलाभो[3] मनोव्यथा ।
सद्व्रतं धर्मवृद्धिश्च[4] सौख्यं च नृपमानसम् ॥ १२०
लग्नाधिपेन संयुक्ते आदौ सौख्यं धनागमः[5] ।
गङ्गास्नानफलप्राप्तिर्देवतादर्शनं महत् ॥ १२१
दायेशात्केन्द्रकोणे वा षष्ठाष्टव्ययराशिगे ।
अपमृत्युभयं किञ्चित् कुत्सितान्नं शिरोरुजा[6] ॥ १२२
शीतज्वरातिसारश्च[7] व्रणचोराग्निपीडनम् ।
देशाद्विदेशसञ्चारो[8] दारपुत्रादिपीडनम् ॥ १२३
द्वितीयद्यूननाथे वा देहपीडा भविष्यति ।
तद्दोषपरिहारार्थं..................[9] ॥
छागदानं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ १२४

---

1. महारक्षः
2. विरोधं च
3. लाभं
4. वृद्धिं च
5. धनागमम्
6. रुजम्
7. सारं च
8. विदेवसंचारं
9. ग्रन्थस्त्रुटितः

சனிதசையில் கேதுவினுடைய அந்தராந்தரபுக்தி மீ 2,
தினம் 3, நாழி 10

फलम् —

स्त्रीनाशो[1] बन्धुनाशश्च[2] स्वादिनाशः[3] प्रजाक्षयः[4] ।
गोमहिष्यादिनाशश्च[5] शनेरभ्यन्तरे ध्वजे ॥ १२५

சனிதசையில் கேதுவினுடைய ஸூக்ஷ்மபுக்தி தினம் 10,
நாழி 18, விநாழி 1

चोरोपद्रवकुष्ठादिमृत्युभिः परिपीडितः ।
भैषज्याद्रोगपीडा स्याच्छनेः सूक्ष्मगते ध्वजे ॥ १२६

சனிதசையில் கேதுவினுடைய ப்ராணபுக்தி தினம் 1.
நாழி 35, விநாழி 15, கலை 48

फलम् —

[6]मृत्युव्यसनदुर्व्याधिभूतोपद्रवसंभवः ।
पुरदारनिवासश्च[7] शनिप्राणगते ध्वजे ॥ १२७

சனிதசையில் சுக்ரபுக்தி வருஷம் 3, மீ 2

तत्फलम्—

सुहृदङ्गनादयः सौख्ययुवतिः कृषितो[8]यान्नजनितार्थनिचयम् ।
शुभकीर्तियुग्भवति देहभृतां च [9]दायहारिणि भृगोस्तनये ॥ १२८

अन्यच्च—

कल्याणं बन्धुसंपत्तिर्वाहनं भूषणं धनम् ।
देवब्राह्मणभक्तिश्च शनेरन्तर्गते भृगौ ॥ १२९

ग्रन्थान्तरे—

मन्दस्यान्तर्गते शुक्रे स्वोच्चे वा स्वर्क्षगेऽपि वा ।
दारपुत्रधनप्राप्तिर्देहारोग्यं महत्सुखम् ॥ १३०
गृहे कल्याणसंपत्ती राज्यलाभो[10] महत्सुखम् ।
महाराजप्रसादेन वस्त्रवाहनभूषणम् ॥ १३१

---

1. नाशं
2. नाशं च
3. नाशं
4. क्षयम्
5. नाशं च
6. मृत्युव्यसनं
7. निवासं तु
8. तोयान
9. किंचित् त्रुटितम्
10. लाभं

समानप्रभुसंमानं प्रियवस्त्राश्वलाभकृत् ।
स्त्रीमूलाद्बहुलाभश्च राजस्त्रीप्रियभाषितम् ॥ १३२
अनेकराजसंमानं सेनाधिक्यं महत्सुखम् ।
देवतागुरुभक्तिश्च विवाहो[1] भवति ध्रुवम् ॥ १३३
उत्तरां दिशमाश्रित्य प्रयाणं राजदर्शनम् ।
युद्धसन्नाहकार्याणि शत्रुहानिः[2] प्रतापवान् ॥ १३४
षष्ठाष्टमव्यये शुक्रे शुभदृष्टिसमन्विते ।
अल्पकार्यं चाल्पबुद्धिराल्पलाभो[3] महद्भयम् ॥ १३५
प्रवासयात्रागमनं धनधान्यप्रदायकम् ।
तामसात् कार्यसिद्धिः स्याद्राजानुग्रहशान्तिकम् ॥ १३६
पापान्विते पापदृष्टे देहालस्यं मनोरुजा[4] ।
देहसंबन्धमरणं धनधान्यविनाशनम् ॥ १३७
आयुधेन भयं चैव दारपुत्रादिनाशनम् ।
दायेशात् केन्द्रकोणे वा धनगे लाभगेऽपि वा[5] ॥ १३८
विभवो[6] दारसौभाग्यं राजश्रीधनसंपदम् ।
रत्नमाणिक्यहेमादि गजाश्वं लाभमेव च ॥ १३९
उत्साहशौर्यं लभते क्षीराज्यं सुखभोजनम् ।
प्रधानमन्त्रितं चैव सेनाधिक्यं महद्यशः ॥ १४०
अन्नदानं महत्कीर्तिं पुण्यश्लोकादिकीर्तनम् ।
दायेशात्षष्ठरन्ध्रे वा व्यये वा बलवर्जिते ॥ १४१
बन्धुद्वेषं मनोदुःखं लुब्धत्वं धान्यनाशनम् ।
कारागृहप्रवेशश्च[7] पुत्रदारादिपीडनम् ॥ १४२
द्वितीयद्यूननाथे वा दारक्लेशो[8] भविष्यति ।
तद्दोषपरिहारार्थं विष्णुसाहस्रकं जपेत् ॥ १४३

சனிதசையில் சுக்ரனுடைய அந்தராந்தரபுக்தி
மீ 6, தினம் 10

फलम् —

वाहनं छत्रसंयुक्तं राज्यलाभश्च वैभवः[9] ।
दानधर्मरतिः श्रीमान् शनेरभ्यन्तरे भृगौ ॥ १४४

---

1. विवाहं
2. शत्रुहन्ति
3. सिद्धिमल्पलाभं
4. रुजम्
5. लाभगे वापि
6. विभवं
7. प्रवेशं च
8. क्लेशं
9. लाभं च वैभवम्

*சனிதசையில் சுக்ரனுடைய ஸூக்ஷ்மபுக்தி தினம்* 28,
*நாழி* 35, *விநாடி* 40, *கலை* 30

फलम् —

ऐश्वर्यमायुधाभ्यासश्चा[1]भिषेकेण वैभवः[2] ।
आरोग्यमर्चनं शान्तिः[3] शनिसूक्ष्मगते भृगौ ॥ १४५

*சனிதசையில் சுக்ரனுடைய ப்ராணபுக்தி தினம்*4, *நாழி* 31,
*விநாடி* 9, *கலை* 25

फलम् —

पुत्रार्थविभवे सौख्यं ख्यातिमानादिसंभवः ।
अग्निहोत्रविवाहश्च[4] शनेः प्राणगते भृगौ ॥ १४६

*சனிதசையில் ரவிபுக்தி மீ* 11, *தினம்* 12

फलम्—

मरणं तु वा[5] रिपुभयं सततं गुरुवर्ग[6]रुग्जनेत्ररुजम् ।
धनदारविच्युतिरिह प्रभवेद्द्विजायुराहरति तीव्रकरे[7] ॥ १४७

अन्यच्च—

दुःखादिशोककलहो[8] व्याकुलं मरणं भयम् ।
क्षेमधान्यादिविहतिः शनेरन्तर्गते रवौ ॥ १४८

ग्रन्थान्तरे— भृगुः—

मन्दस्यान्तर्गते सूर्ये लग्नाल्लाभत्रिकोणगे ।
केन्द्रे वा शुभसंयुक्ते स्वांशे स्वक्षेत्रगेऽपि वा ॥ १४९
नष्टराज्यधनप्राप्तिर्गृहे गोधनसङ्कुलम् ।
इष्टदेवप्रसादेन शुभदृष्टिसमन्विते ॥ १५०
स्वप्रभोश्च महत्सौख्यं भूषणाश्वाम्बरादिकृत् ।
कुक्षिषु च सुसन्तानं स्त्रीलाभश्च[9] शुभावहम् ॥ १५१
पापयुक्तेऽथवा सूर्ये नीचरिःफारिषष्ठगे ।
कलहेन विचारः स्याद्दारपुत्रादिपीडनम् ॥ १५२

---

1. आयुधाभ्यासमभि
2. वैभवम्
3. शान्ति
4. विवाहं तु
5. त्वा
6. रुग्जननेत्र
7. आहरतीतिम्रकरे
8. कलहं
9. लाभं च

विदेशगमनं वापि रणशस्त्रादिपीडनम् ।
युद्धेष्वपजयो[1] वापि धनधान्यपशुक्षयः[2] ॥ १५३
कारागृहप्रवेशश्च[3] निगळं बन्धुनाशनम् ।
भुक्त्यादौ कष्टमाप्नोति मध्यान्ते सौख्यमाप्नुयात् ॥ १५४
शीतज्वरातिसारं च रविभुक्तौ न सशयः ।
दायेशात्केन्द्रकोणे वा दुश्चिक्ये लाभगेऽपि वा ॥ १५५
अल्पसौख्यं चाल्पलाभो[4] राजपूज्यं महत्सुखम् ।
कल्याणवृद्धिरैश्वर्यं भूलाभः[5] पुत्रसंभवः[6] ॥ १५६
रक्तवस्त्राश्वलाभश्च[7] प्रयाणे राजदर्शनम् ।
दायेशाषष्ठ[8]रिःफे वा रन्ध्रे वा पापसंयुते ॥ १५७
पुत्रदारादिनाशश्च[9] देहजाड्यं महद्भयम् ।
द्वितीयद्यूननाथे वाकालमृत्युर्न संशयः ॥
मृत्युञ्जयजपं कुर्याद्देहारोग्यं न संशयः । १५८

*சனிதசையில் ரவியினுடைய அந்தராந்தரபுக்தி*
*தினம் 17, நாழி 6*

फलम्—

धनक्षयो[10] राजकोपो[11] बन्धुनाशो[12] महद्भयम् ।
अक्षिरोगः[13] शिरोरोगः[14] शनेरभ्यन्तरे रवौ ॥ १५९

*சனிதசையில் ரவியினுடைய ஸூக்ஷ்மபுக்தி*
*தினம் 1, நாழி 24*

फलम्—

द्रव्यनाशो[15] मनोदुःखमपस्मारप्रदोषतः ।
सर्वेषां वैपरीत्यं च शनेः सूक्ष्मगते रवौ ॥ १६०

---

1. जयं
2. क्षयम्
3. प्रवेशं च
4. अल्पसौख्यं अल्पलाभं
5. लाभं
6. संभवम्
7. वस्त्रांश्च लाभं च
8. दायेशाष्षष्ठ
9. नाशं च
10. क्षयं
11. कोपं
12. नाशं
13. रोगं
14. रोगं
15. नाशं

சனிதசையில் ரவியினுடைய பிராணபுக்தி நாழி 1,
விநடி 25

तत्फलम्—

अक्षिरोगः[1] शिरोरोगः[2] शत्रुभीतिर्मृतिस्तथा[3] ।
अर्थहानिर्गुरुक्लेशः शनिप्राणगते रवौ ॥ १६१

சனிதசையில் சந்திரபுக்தி ஷெ 1, பி 7

तत्फलम्—

गुरुदेवद्विजातीनां प्रजाधर्मपरायणः ।
दारपुत्रस्य संपत्तिः शनेरन्तर्गते विधौ ॥ १६२
वनिताहतिर्मरणमेव नृणां सुहृदां विपत्तिरथ [4]रोगभयम् ।
[5]जलपातजं भयमतीव भवेद्रविजायुरा (?) विशति[6] शीतकरे ॥ १६३

ग्रन्थान्तरे—भृगुः—

मन्दस्यान्तर्गते चन्द्रे जीवदृष्टिसमन्विते ।
स्वोच्चस्वक्षेत्रगे चन्द्रे त्रिकोणे लाभगेऽपि वा ॥ १६४
पूर्णचन्द्रे सौम्ययुक्ते राज्यप्राप्तिर्न संशयः ।
महाराजप्रसादेन वाहनाम्बरभूषणम् ॥ १६५
सौभाग्यं सुखवृद्धिश्च भृत्यैश्च[7] परिपालनम् ।
पितृमातृकुले[8] सौख्यं पशुवृद्धिसुखाधिकम् ॥ १६६
क्षीणे वा पापसंयुक्ते पापदृष्टे च नीचगे ।
क्रूरांशकगते वापि क्रूरक्षेत्रगतेऽपि वा ॥ १६७
जातकस्य महत्कष्टं राजकोपो[9] धनक्षयः[10] ।
पितृमातृवियोगश्च पुत्रपौत्रादिरोगकृत् ॥ १६८
मित्रप्रभुविनाशः स्यात्स्वदेहायासपीडनम् ।
स्थानभ्रंशो[11] महाकष्टं षष्ठाष्टव्ययराशिगे ॥ १६९
दायेशात्केन्द्रराशिस्थे त्रिकोणे लाभगेऽपि वा ।
नृपाभिषेकमर्थाप्तिर्देशग्रामाधिपत्यता[12] ॥ १७०
फलमीदृशमादौ तु भुक्त्यन्ते राजकोपनम् ।
भ्रातृवृद्धिसुखं चैव आरोग्यं भूषणादिकम् ॥ १७१

---

1. रोगं
2. रोगं
3. भीतिं मृतिं तथा
4. रगु
5. जल्पातजं
6. रविजायुरार्यविशति
7. भृत्यश्च
8. कुलं
9. कोपं
10. क्षयम्
11. भ्रंशं
12. पत्यताम्

अश्ववाहनयोगश्च चतुष्पाज्जीवलाभकृत् ।
दायेशाद्रन्ध्ररिःफे वा षष्ठे वा पापसंयुते ॥ १७२

शयनं भोग्यमालस्यं स्थाननाशः[1] सुखक्षयम् ।
शत्रुवृद्धिर्विरोधश्च जयापजयमेव च ॥ १७३

भुक्त्यादौ सुखमाप्नोति मध्ये राजप्रियं सुखम् ।
अन्ते क्लेशकरं चैव पशुधान्यव्ययं भवेत् ॥ १७४

द्यूनाधिपद्वितीये वा पापयुक्ते कुमारकैः[2] ।
तिलहोमजपादीनां मृत्युञ्जयजपं चरेत् ॥ १७५

गुळं घृतं च दद्यात्तु तण्डुलं च यथाविधि ।
श्वेतां गां महिषीं दद्यादायुरारोग्यमादिशेत् ॥ १७६

*சனிதசையில் சந்த்ரனுடைய அந்தராந்தரபுக்தி மீ 1, தினம் 17, நாழி 30*

फलम्—

सज्जनानुगतश्चैव दारपुत्रार्थसञ्चयः ।
वातपित्तविनाशश्च[3] शनेरभ्यन्तरे विधौ ॥ १७७

*சனிதசையில் சந்த்ரனுடைய ஸூக்ஷ்மபுக்தி தினம் 3, நாழி 45*

फलम्—

ऐश्वर्यं रोगनाशश्च[4] नानाविधधनागमः[5] ।
राजपूज्यो भवेन्नित्यं शनेः सूक्ष्मगते विधौ ॥ १७८

*சனிதசையில் சந்த்ரனுடைய ப்ராணபுக்தி நாழி 31, விநாடி 15*

फलम्—

आरोग्यं पुत्रलाभश्च[6] शान्तिकं पौष्टिकं तथा ।
देवब्राह्मणपूजा च शनेः प्राणगते विधौ ॥ १७९

*சனிதசையில் குஜபுக்தி வரு 1, மீ 1, தினம் 9*

तत्फलम्—

स्वपदच्युतैः स्वजनविग्रहयुग्ज्वरवह्निशस्त्रविषभीरथवा[7] ।
अरिवृद्धिरन्तररुगक्षिभयं रविजायुराविशति भूमिसुते ॥ १८०

---

1. नाशं
2. तु मारकै
3. विनाशं च
4. नाशं च
5. धनागमम्
6. लाभं च
7. भीतिरथवा

अन्यच्च—

प्राणहा कृशपीड्यश्च नेत्ररोगादिपीडितः ।
अग्निचोरभयं दुःखं शनेरन्तर्गते कुजे ॥ १८१

मन्थान्तरे— भृगुः—

मन्दस्यान्तर्गते भौमे केन्द्रलाभत्रिकोणगे ।
तुङ्गस्वक्षेत्रगे वापि दशाधिपसमन्विते ॥ १८२

लग्नाधिपेन संयुक्त आदौ राज्यं सुखावहम् ।
महोत्सवादिसन्तोषो वाहनाम्बरभूषणम् ॥ १८३

युद्धे जयप्रतापश्च[1] महाकीर्तिः स्वराशिगे ।
सेनाधिक्यं नृपात्प्रीतिरुष्णाधिक्यं[2] शिरोरुजम् ॥ १८४

नूतनं[3] गृहनिर्माणं वाहनाम्बरभूषणम् ।
लाभाधिकृदशाकाले लग्नाधिपतिभुक्तिषु ॥ १८५

जयप्रतापयुद्धं च गृहे लक्ष्मीकटाक्षकृत ।
नीचे वास्तंगते भौमे षष्ठाष्टव्ययराशिगे ॥ १८६

पापदृष्टियुते वापि अर्थहानिर्भविष्यति ।
चोराग्निव्रणशस्त्रादिग्रन्थिमेहादिपीडनम् ॥ १८७

कारागृहादिभीतिश्च अरिष्टजननी[4] तथा ।
भ्रातृपुत्रमहाक्लेशं दायादिजनविड्वरम् ॥ १८८

दायेशात्केन्द्र[5]कोणे वा लाभे वा बलसंयुते ।
किञ्चित्फलं तथादौ च मध्ये सौख्यं धनागमः[6] ॥ १८९

अन्ते[7] क्लेशकरं चैव धनधान्यपशुक्षयः[8] ।
देहपीडा मनस्तापं ज्वराग्निरणपीडनम् ॥ १९०

दायेशात्षष्ठरन्ध्रे वा व्यये वा पापसंयुते ।
गुह्यरोगो[9] मूत्ररोगस्ताप[10]ज्वरमथापि वा ॥ १९१

युद्धेषु मरणं याति[11] विषबाधा भविष्यति ।
अष्टमद्यूननाथे वा द्वितीयेशेन वा यदि ॥ १९२

---

1. प्रतापं च
2. प्रीतिमुष्णाधिक्यं
3. नूतन
4. अरिष्टं जननीं
5. केन्द्रं
6. धनागमम्
7. अन्त्ये
8. क्षयम्
9. रोगं
10. रोगं ताप
11. यान्ति

अपमृत्युभयं चैव छागदानं च कारयेत् ।
अनड्वाहं प्रकुर्वीत-सर्वसंपत्प्रदायकम् ॥ १९३

சனிதசையில் குஜனுடைய அந்தராந்தரபுக்தி
தினம் 23, நாழி 18, விநாடி 30

फलम्—
स्थानच्युतिर्मनस्तापं[1] परिबृन्दधनक्षयः ।
अपस्मारप्रपीडा च शनेरभ्यन्तरे कुजे ॥ १९४

சனிதசையில் குஜனுடைய ஸூக்ஷ்மபுக்தி
தினம் 1, நாழி 45

फलम्—
रक्तपित्तं च कुष्ठं च मनोदुःखं गुरोर्वधः[2] ।
सर्वत्र विफलत्वं च शनेः सूक्ष्मगते कुजे ॥ १९५

சனிதசையில் குஜனுடைய ப்ராணபுக்தி விநாடி 4

फलम्—
गुल्मरोगः[3] शत्रुपीडा क्लेशव्याधिर्यथा तथा ।
अग्निपीडा मृगाद्भीतिः शनिप्राणगते कुजे ॥ १९६

சனிதசையில் ராஹுபுக்தி ௵ 2, ௴ 10, தினம் 6

फलम्—
अपमार्गयानमसुभिर्विरहस्त्वथवा[4] प्रमेहगुरुगुल्मभयम्[5] ।
ज्वरसुक्षितिः सततमेव नृणा[6]मसितायुराविशति भोगिपतौ ॥ १९७

अन्यच्च—
मनस्त्वङ्नेत्रऽपीडा[7] च कुष्ठादिकविचर्चिका ।
प्राणत्यागरुजाप्राप्तिः[8] शनेरन्तर्गतेऽप्यहौ ॥ १९८

ग्रन्थान्तरे—
मन्दस्यान्तर्गते राहौ कलहेन मनोव्यथा ।
देहपीडा मनस्तापं पुत्रद्वेषो[9] मनोरुजा[10] ॥ १९९

---

1. मनः -
2. गुरुर्वधा
3. रोगं
4. यानमधुभिर्विरहं त्वथवा
5. गुल्माभयम्
6. रणा
7. त्वन्नेत्रपीडं
8. रुजप्राप्तिः
9. द्वेषं
10. रुजम्

अर्थव्ययो[1] राजकार्ये स्वजातीनामुपद्रवः[2] ।
विदेशगमनं चैव गृहक्षेत्रादिनाशनम् ॥ २००

देवब्राह्मणभक्तिश्च बहुद्रव्यादि[3]लाभकृत् ।
महाराजप्रसादेन ग्रामभूम्यादिलाभकृत् ॥ २०१

चतुष्पाज्जीवलाभः स्याद्गजान्नैश्वर्य[1]मादिशेत् ।
मध्ये तु राजभीतिः स्याद्धनधान्यादिनाशनम् ॥ २०२

पुत्रप्राबल्ययोगेन राजानुग्रहशान्तिकम् ।
अन्ते[5] तु राजभीतिः स्याद्धनधान्यादिवर्धनम् ॥ २०३

आप्तबन्धोर्मनश्शोको[6] मित्रद्रोहो[7] मनोरुजा[8] ।
हृद्रोगो[9] मानहानिः स्याद्धनधान्यपशुक्षयः ॥ २०४

मेषादिकन्यकान्ते च[10] कुळीरे वृषभे तथा ।
मीनकोदण्डसिंहेषु गजान्नैश्वर्य[11]मादिशेत् ॥ २०५

राजसंमानभूषाप्ति मृष्टान्नाम्बरसौख्ययोः ।
शन्यायां रविसंबन्धे पितृमातृविनाशनम् ॥ २०६

द्विसप्तमाधिपैर्युक्ते मारको भवति ध्रुवम् ।
छागदानं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ २०७

*சனிதசையில் ராஹுவினுடைய அந்தராந்தரபுக்தி*
*மீ 5, தினம் 12, நாழி 27*

फलम्—

चोराग्निविषभीतिश्च राजकोपो[12] धनक्षयः[13] ।
बन्धुहानिः स्वनाशश्च[14] शनरेभ्यन्तरेऽप्यहौ ॥ २०८

*சனிதசையில் ராகுவினுடைய ஸூக்ஷ்மாந்தரபுக்தி தினம் 2,*
*நாழி 43, விநாடி 12*

फलम्—

भूतोपद्रवदोषश्च क्षयाशापादपादकः ।
चित्तभ्रमादिभीतिश्च शनेः सूक्ष्मगतेऽप्यहौ ॥ २०९

---

1. व्ययं
2. उपद्रवम्
3. द्रव्याधि
4. गजान्तैश्वर्य
5. अन्त्ये
6. शोकं
7. द्रोहं
8. रुजम्
9. हृद्रोगं
10. कन्निका चैव
11. गजान्तैश्वर्य
12. कोपं
13. क्षयम्
14. नाशं च

*சனிதசையில் ராஹுவினுடைய ப்ராணபுக்தி தினம் 4, நாழி 4, விநாடி 56*

फलम्—

देशत्यागो महद्भीतिमोहनं[1] विषभक्षणम् ।
वातपित्तकफं चैव शनिप्राणगतेऽप्यहौ ॥ २१०

*சனிதசையில் குருபுக்தி ஹ 2, மீ 6, தினம் 12*

फलम्—

अमरार्चनं द्विजगुणाभिरतिर्ग्रहपुत्रदारविहृतस्तु भवेत् ।
तनयाभिमान[2]शयनादिरुची रविजायुराविशति देवगुरौ ॥ २११

अन्यच्च—

देवार्चनं राजपूजा सपर्यां च सुतागमम् ।
स्थानलाभमवाप्नोति शनेरन्तर्गते गुरौ ॥ २१२

ग्रन्थान्तरे—

विद्रुमं हेमवस्त्रं च वाहनप्राभवं धनम् ।
नृपतेः पूजनं धान्यं शनेरन्तर्गते गुरौ ॥ २१३

ग्रन्थान्तरे—

मन्दस्यान्तर्गते जीवे केन्द्रलाभत्रिकोणगे ।
लग्नाधिपेन संयुक्ते स्वोच्चस्वक्षेत्रगेऽपि वा ॥ २१४
सर्वकार्यार्थसिद्धिः स्याच्छोभनं भवति ध्रुवम् ।
महाराजप्रसादेन गजवाहनभूषणम् ॥ २१५
समानप्रभुसंमानं प्रियवस्त्राभलाभकृत् ।
राज्यलाभो[3] महोत्साहो[4] पुत्रपौत्राभिवृद्धिदः ॥ २१६
अनेकराज्यसंमानं सेनाधिक्यं महत्सुखम् ।
देवतागुरुभक्तिश्च विवाहो[5] भवति ध्रुवम् ॥ २१७
वायव्यां दिशमाश्रित्य प्रयाणं राजदर्शनम् ।
युद्धसन्नहकार्याणि शत्रुहानिः प्रतापवान् ॥ २१८
समरे विजयश्चैव[6] गुरुभक्तिर्न संशयः ।
षष्ठाष्टमव्यये जीवे शुभदृष्टिसमन्विते ॥ २१९

---

1. भीतिं मोहनं
2. तनपाभिमान
3. लाभं
4. महोत्साहं
5. विवाहं
6. विजयं चैव

अल्पकार्यं चाल्पबुद्धिर्देहतापो[1] महद्भयम् ।
प्रवासयात्रागमनं धनधान्यप्रदायकम् ॥ २२०

तामसात्कार्यसिद्धिश्च[2] राजानुग्रह[3]शान्तिकम् ।
पापान्विते पापदृष्टे देहालस्यं मनोरुजा[4] ॥ २२१

देहसंबन्धमरणं धनधान्यविनाशनम् ।
आयुधेन भयं चैव दारपुत्रादिनाशनम् ॥ २२२

दायेशात्केन्द्रकोणे वा धने वा लाभगेऽपि वा ।
सोदरेण विरोधः स्याद्विष[5]शस्त्राग्निपीडनम् ॥ २२३

अशुभग्रहकर्माणि दुःस्वप्नादिभयं ध्रुवम् ।
अकस्मात्कलहश्चैव[6] क्षुद्रशून्यादिरोगकृत् ॥ २२४

द्विसप्तमास्थिते जीवे देहबाधां[7] विनिर्दिशेत् ।
तद्दोषपरिहारार्थं छागदानं च कारयेत् ॥ २२५

*சனிதசையில் குருவினுடைய அந்தராந்தரபுக்தி மா 4,*
*தினம் 1, நாழி 36*

फलम्—

स्त्रीलाभः[8] पुत्रलाभश्च[9] मित्रलाभो[10] धनागमः[11] ।
सौभाग्यं वस्त्रलाभश्च[12] शनेरभ्यन्तरे गुरौ ॥ २२६

*சனிதசையில் குருவினுடைய ஸூக்ஷ்மபுக்தி*
*தினம் 16, விநாடி 1*

फलम् —

संभोगो[13] राजसंमानं धनधान्यविवर्धनम् ।
चामरच्छत्रसंयुक्तं शनिसूक्ष्मगते गुरौ ॥ २२७

*சனிதசையில் குருவினுடைய ப்ராணபுக்தி*
*தினம் 1, விநாடி 1*

फलम् —

सेनापतिर्भूमिलाभः[14] संगमो[15] नृपपूजनम् ।
गन्धान्नपानसंपत्तिः शनेः प्राणगते गुरौ ॥ २२८

---

1. बुद्धिं देहतापं
2. सिद्धिं च
3. राजाबुग्रह
4. रुजम्
5. विरोधस्य विष
6. कलहं चैव
7. बाधा
8. लाभं
9. लाभं च
10. लाभं
11. धनागमम्
12. लाभं च
13. संभोगं
14. सेनापतिं भूमिलाभं
15. संगमं

## अथ बुधदशाफलं वक्ष्यते

புத்தகை ஏடு 17

फलम्—

अत्युच्चसोमात्मजदायकाले धर्मान्वितः ख्यातिमुपैति सौख्यम् ।
ज्ञानं च कीर्तिं जननायकत्वं स्त्रीपुत्रभूम्यर्थमहोत्सवं च ॥ १

उच्चान्वितस्यापि शशाङ्कसूनोर्दशा महत्त्वं कुरुतेऽर्थसिद्धिम् ।
देहस्य पुष्टिं धनदारपुत्रगोवाजिमत्तेभमृदङ्गनादम् ॥ २

आरोहिणीं[1] सौम्यदशां[2] प्रपन्नो[3] यज्ञोत्सवं गोवृषवाजिसौख्यम् ।
मृद्वन्नभूषाम्बरधान्यलाभं वाणिज्यभूम्यर्थपरोपकारम् ॥ ३

शशाङ्कसूनोस्त्ववरोहिणी या दशा महत्कष्टतरं च दुःखम् ।
विज्ञानहानिः[4] परदारसङ्गः[5] नृपाग्निचोरैर्भयमत्र कल्पम् ॥ ४

नीचस्थचन्द्रात्मजदायकाले ज्ञानं विहीनं स्वजनैर्वियुक्तम् ।
पदच्युतिर्बन्धुविरोधता[6] च विदेशयानं वनवासदुःखम् ॥ ५

मूलत्रिकोणान्वितदायकाले राज्यं महत्सौख्यकरं च कीर्तिम् ।
विद्याविलासं निगमान्तशीलः पुराणधर्मश्रवणादिपूतः ॥ ६

स्वक्षेत्रगस्यापि शशाङ्कसूनोः प्राप्तो[7] दशायां धनधान्यसंपत्[8] ।
वाणिज्यगोभूमिसुतार्थदारमृद्वन्नपानाम्बरभूषणाप्तिम् ॥ ७

शशाङ्कसूनोरतिशत्रुराशिं गतस्य[9] पाके विपदं च दुःखम् ।
उद्योगभङ्गं स्वजनैर्विरोधं यज्ञादिविघ्नं शुभकर्मनाशम् ॥ ८

शशाङ्कसूनोस्त्वरिराशिगस्य शत्रोर्भयं भूपतिकोपजातम् ।
विद्याविहीनं कुलहीनसेवा कुभोजनं दारसुतार्थनाशः[10] ॥ ९

मित्रक्षेत्रदशायां शशाङ्कसूनोस्तनयादिसौख्यम् ।
नामद्वयसंप्राप्तिं[11] नामाङ्कितगद्यपद्यकाव्यानि[12] ॥ १०

मित्रगदशां[13] प्रपन्नां महात्त्वतां यान्ति सुतार्थसौख्यम् ।
भूमिपति[14]मैत्रसौख्यं धनसुतदाराश्च बन्धुसंमानम् ॥ ११

---

1. आरोहिणी
2. दशा
3. प्रपन्ना
4. हीनं
5. सङ्गं
6. विरोधता
7. प्राप्तं
8. पाठो न शुद्धः
9. राशिर्गतस्य
10. नाशं
11. द्वयं संप्राप्तिं
12. स्वनामाङ्कितगद्यपद्यानि
13. अतिमित्रराशिगस्य दशा
14. भूपति

समर्क्षगस्यापि शशाङ्कसूनोर्दशासुखं धान्यसुताम्बराणि ।
करोति राज्यं सितमन्नविघ्नं विज्ञानहीनं विकटादिरोगम् ॥ १२

नीचखेचरसंयुक्तसौम्यदाये तु कष्टताम् ।
पदभ्रंशं[1] बन्धुनाशं कर्मनाशं मनोरुजम् ॥ १३

उच्चखेचरसंयुक्तसौम्यदाये महत्सुखम् ।
भोगोत्तरं सुविद्यां च वाणिज्यं गोकृषिक्रियाम्[2] ॥ १४

पापान्वितबुधस्यापि दाये पापमुपैति च ।
क्षेत्रार्थदारपुत्रादिकृषिगोभूमिनाशनम् ॥ १५

सौम्यैर्युतबुधस्यापि परिपाके महत्सुखम् ।
राज्यं भोगं सुखं कीर्तिं दारपुत्रनृपात्सुखम् ॥ १६

सौम्येक्षितस्यापि शशाङ्कसूनोर्दशाविपाके महती च विद्या ।
मनोविलासोद्भवराज्यपूज्या[3] कान्तिः प्रतापो[4] यशसा समेतः[5] ॥ १७

पापेक्षितस्यापि शशाङ्कसूनोर्धान्यक्षयो[6] बन्धुजनैर्वियुक्तः ।
विदेशयानं स्वपदच्युतिर्वा[7] प्रेष्यानुवृत्त्या कलहोऽध्वकृच्छ्रम् ॥ १८

केन्द्रं गतस्य च दशा शशिनन्दनस्य
भूपालमित्रधनधान्यकलत्रपुत्रान् ।
यज्ञादिकर्मनृपमानन[8]लब्धभाग्यं
मृद्वन्नपानमुदकाम्बर[9]भूषणाप्तिम् ॥ १९

लग्नं गता[10] बुधदशा जननायकत्वं
भूपालमाननयनं कृषिलब्धभाग्यम् ।
भेरीरवादिपरिघोषितयानमार्गं
तीर्थाभिषेकमथवा[11] जगति प्रसिद्धम् ॥ २०

वित्तगसौम्यदशायां विद्याप्राप्तिर्महत्त्वकीर्तिश्च ।
भूपतिभाग्यसमाने[12] राजस्थाने प्रधानता[13] च स्यात् ॥ २१

तृतीयराशिस्थितचन्द्रसूनोर्दशाविपाके जडतां समेति ।
उद्यानमाजीवनगुल्मरोगं भ्रातुर्विनाशं[14] नृपमाननं च ॥ २२

---

1. भ्रमं
2. क्रिया
3. पूज्यं
4. प्रतापं
5. समेतम्
6. क्षयं
7. च्युतिं वा
8. नृपमानस
9. पानमृदकाम्बर
10. गतस्य
11. मथता
12. समानेन
13. प्रधानता इत्येव विद्यते
14. विदेशं

शशाङ्कसूनोर्हिबुकस्थितस्य दशा प्रपन्ना गृहधान्यनाशम् ।
सौख्यादिहीनं मरणं जनन्या उद्योगभङ्गं स्वपदच्युतिं च ॥ २३

पञ्चमस्थशशिनन्दनस्य वाक्क्रूरबुद्धिरतिकष्टता[1] भवेत् ।
हीनबुद्धिरपि राजसेवयोः कृच्छ्रलब्धधनमेति संपदम् ॥ २४

षडष्टमान्त्यस्थितसौम्यदाये [2]त्वग्दोषजातं बहुरोगमेति ।
विचर्चिकापैत्तिकपाण्डुरोगं नृपाग्निचोरैर्मरणं कृशत्वम् ॥ २५

देहाङ्गवैकल्यकलत्रबन्धुविद्वेषणं भूपतिदत्तकोपम् ।
आकस्मिकं मृत्युभयं प्रमादं दारस्थितस्यापि शशाङ्कसूनोः ॥ २६

दशाविशेषे सुतदारवित्तं विद्याविनोदं विमलाम्बरं च ।
नामद्वयं भूपतिमैत्रतां च मातामहीवर्ग[3]मुपैति सौख्यम् ॥ २७

भाग्यस्थितस्यापि शशाङ्कसूनोर्भाग्योत्तरं दारसुतार्थलाभम् ।
तीर्थाभिषेकं जपहोमदानं यज्ञादिकार्यं[4] लभते मनुष्यः ॥ २८

प्रपूजनं देवमहीसुराणां साम्राज्यलाभं जननायकत्वम् ।
कवित्वमार्गं समुपैति काले यज्ञादिदीक्षां स्वजनैर्विशेषात् ॥ २९

कर्मस्थितस्यापि शशाङ्कसूनोर्दशाविपाके नृपतुल्यमेति ।
सौख्यं स्वनामाङ्कितगद्यपद्यं नामद्वयं दारसुतार्थलाभम् ॥ ३०

[5]उपान्त्यराशिस्थितसौम्यदाये अनेकधा वित्तमुपैति काले ।
दानेन वा भूपतिमाननाद्वा कृषेश्च वाणिज्यविचारतो वा ॥ ३१

उच्चांशसंयुक्तशशाङ्कसूनोर्दशाविशेषे सुतभूषणाप्तिः ।
मनोविलासो[6] मदनाभिरामा[7] उत्साहशौर्यं च जलाभिषेकम् ॥ ३२

नीचांशकयुतः सौम्यो नीचवृत्त्यानुजीवनम् ।
प्रेष्यत्वं परिचारं च तद्दशायां करोति तत् ॥ ३३

सौम्यदशायामादौ लभते धनधान्यसंपदः[8] ।
अन्ते स्वजनविरोधं मध्ये दाये नरेन्द्रसंमानम् ॥ ३४

अर्कगसौम्यदशायां लभते विविधं पदं[9] मनोदुःखम् ।
स्वकुलजननृपविरोधं सदा भयं चाक्षिगण्ड[10]रोगं च ॥ ३५

---

1. कष्टतां
2. त्वद्दोष
3. महावर्ग
4. कर्म
5. उपात्य
6. विलासं
7. रामं
8. अपरमत्र पदमपेक्षितम्
9. विविधपदं
10. कण्ड

स्थानवीर्ययुते सौम्ये तत्पाके राज्यकीर्तिदम् ।
मनोधैर्यं महोत्साहं यज्ञदीक्षां शुभक्रियाम् ॥ ३६

दिग्वीर्यसहिते सौम्ये दिगन्ताद्धनिकः सुखी ।
ग्रामं तु राजमैत्रं च गन्धमाल्यादिलेपनम् ॥ ३७

तद्विहीने बुधस्थाने दारपुत्रमहद्भयम् ।
विदेशवासदुःखं च नानापरिभवक्रियाम ॥ ३८

क्रूरवीर्ययुतसौम्यदशायां देहसौख्यकलहादिवियोगम् ।
दारपुत्रनृपमानमेति गाङ्गतोयकृतपूततनुः स्यात् ॥ ३९

निसर्गवीर्यान्वितसौम्यदाये निसर्गतश्चापि शुभादिकर्म ।
विद्याविवादं स्वजनैर्विरोधं मातुर्वियोगं त्वथवा तदीयम् ॥ ४०

वक्रचेष्टाबले सौम्ये भाग्यदारसुतार्थभाक् ।
पुराणदानदीक्षादिसमुद्रस्नानमाचरेत् ॥ ४१

दुर्बलेन युते सौम्ये सर्वभूतेषु साम्यताम् ।
करोति रतिकेलिं च राजभाग्यजमानताम्[1] ॥ ४२

क्रूरषष्ठांशसौम्यस्य दशाकाले महद्भयम् ।
चोराग्निभूपैर्भीतिः[2] स्याच्छुभदृग्योगवर्जिते ॥ ४३

मृद्वंशादियुते सौम्ये राज्यलाभो[3] महत्सुखम ।
मार्दवः सर्वभूतेषु कृषिपुत्रार्थसंपदः[4] ॥ ४४

सौम्ये वैशेषिकांशस्थे विशेषाद्राजपूज्यता ।
सुगन्धाम्बरमाल्यं च विद्यागोष्ठीरहस्यता ॥ ४५

क्रूरद्रेक्काणसंयुक्तश्चन्द्रसूनुर्यदा तदा ।
चोराग्निभूपतिभयं स्थाननाशो[5] महद्भयम् ॥ ४६

उच्चराशिगतः सौम्यो नीचभागगतोऽपि वा ।
राज्यं सुखं महत्कीर्तिं विनाशं [6]चापि तत्क्षणात् । ४७

चन्द्रात्मजोऽपि नीचस्थः स्वोच्चभागसमन्वितः ।
अशुभं फलमादौ तु शुभमन्ते[7] प्रयच्छति ॥ ४८

---

1. भाग्ययमानता
2. भूतिः
3. लाभं
4. संपदम्
5. भयस्थाननाशं
6. यदि
7. शुभमन्त्ये

ग्रन्थान्तरे—प्रदीपिकायाम्—

[1]मेषस्थसौम्यदाये तु शत्रुमूलभयं विपत् ।
व्रणरोगश्च[2] दारिद्र्यं विद्यालाभो[3] मनस्सुखम्[4] ॥ ४९

वृषस्थसौम्यदाये तु भ्रातृसौख्यं धनं विपत् ।
किञ्चिद्धान्यं कृषेर्लाभः[5] किञ्चित्सौख्यमरेर्भयम् ॥ ५०

कर्किस्थसौम्यदाये तु विद्याकलहरोगभाक् ।
वाहनाशं भ्रातृहानिर्बन्धूनां[6] कलहः[7] सदा ॥ ५१

सिंहस्थसौम्यदाये तु राज्यलाभस्तथा[8] सुखम् ।
तौलिस्थसौम्यदाये तु पुत्रनाशोऽथवा विपत् ॥ ५२

भाग्यनाशः कृषेर्हानिः शत्रुभीतिः[9] सभाजयः[10] ।
कन्यासंस्थस्य सौम्यस्य पाके राजभयं भवेत् ॥ ५३

भाग्यं च व्रणरोगश्च[11] भार्याकलह एव[12] च ।
अश्वानतं व्रणे रोगं भार्यानाशं विपत्तथा ॥ ५४

कीटस्थसौम्यदाये तु भ्रातृनाशं व्रणं तथा ।
विपदं राजभीतिं[13] च किञ्चित्सौख्यं विनिर्दिशेत् ॥ ५५

चापस्थसौम्यदाये तु किञ्चिद्धान्यं [14]धनं सुखम् ।
शत्रुभीतो रणाग्निश्च क्लेशजातं[15] पितुर्विपत् ॥ ५६

मृगस्थसौम्यदाये तु भ्रातृनाशं सुखं धनम् ।
कर्मनाशं मनस्तापं दारिद्र्यं च व्रणं नरः ॥ ५७

कुम्भस्थसौम्यदाये तु सर्वस्वं लभते क्षयम् ।
भ्रातृवर्गविनाशं च किञ्चिद्धान्यं धनं लभेत् ॥ ५८

[16]मीनस्थबुधदाये तु शत्रुनाशमथाक्षिरुक्[17] ।
सर्वस्वं विलयं याति किञ्चिद्धान्यं धनं लभेत् ॥ ५९

---

1. मेषस्य
2. रोगं च
3. लाभं
4. मनस्सुकृत्
5. लाभं
6. हानिबन्धूनां
7. कलहं
8. लाभं तथा
9. भीतिं
10. जयम्
11. रोगं च
12. कलहमेव
13. भीतिश्च
14. धान्यधनं
15. जातो
16. मीनस्न
17. रुत्

रविणा संयुते दृष्टे मातुर्वा मरणं विपत् ।
कुजेन संयुते दृष्टे प्राणरोगी भवेन्नरः ॥ ६०
गुरुणा संयुते दृष्टे सर्वं दत्त्वा हरिष्यति ।
शत्रुणा भूविवादं च पुत्रलाभं लभेन्नरः[1] ॥ ६१
शुक्रेण संयुतो दृष्टः[2] कलत्रस्य च रोगदः ।
शनिना संयुते दृष्टे किञ्चिल्लाभस्तथा[3] सुखम् ॥ ६२
शनिदृष्टिसमायुक्ते किञ्चिल्लाभो भवेद् ध्रुवम् ।
राहुकेतुसमायुक्ते शत्रुभीतिस्तथा[4] विपत् ॥ ६३

ग्रन्थान्तरे—

वाणिज्यं कर्षणावृत्तिर्विद्यालाभो[5] धनागमः[6] ।
विवाहो[7] बन्धुकल्याणं बुधस्यादिदशाफलम् ॥ ६४

सौम्यः कुर्यात्पट्टबन्धं निधानं
स्त्रीपुत्राणां प्रीतिमिष्टार्थसिद्धिम् ।
रत्नादीनां भूषणानां गजानां
विद्यालाभं स्वदशायां[8] श्रियं च ॥ ६५

विद्यालाभं दूतवैश्यादिसङ्गं
भूपैर्मित्रं भूषणाच्छादनं च ।
स्त्रीपुत्राणां संगमं च स्थिरं च
सौम्यस्य स्यात्स्वस्य चान्तर्दशायाम् ॥ ६६

वित्तं भोज्यं द्रव्यलाभं सुपुण्यं
गीते वाद्ये सभिलाषं च कुर्यात् ।
सौम्यस्तुष्टिं वै तृतीये दशाब्दे
देहारोग्यं गोगजाश्वादिलाभम् ॥ ६७

शिल्पाभ्यासं द्रव्यतुष्टिं च कीर्तिं
सन्मित्राणां सङ्गमं चित्रवस्त्रम् ।
सौम्यः स्वस्यां सूक्ष्मकायां दशायां[9]
दद्यान्निद्रां देहकान्तिं श्रियं च ॥ ६८

---

1. लाभो भवन्नरः
2. संयुते दृष्टे
3. लाभं तथा
4. भीतिं तथा
5. वृत्तिं विद्यालाभं
6. धनागमम्
7. विवाहं
8. छन्दोभङ्गो लक्ष्यते
9. एतत्पदं न विद्यते

स्वःस्त्रीरतिं गीतरतिं सुभोगं
पुष्पैः फलैर्भूरिसमृद्धवृद्धिम् ।
सौम्य. स्वकायां कुरुते दशायां
प्रजां च सौख्यं च तु पञ्चमायाम् ॥ ६९

ग्रन्थान्तरे—भृगुः—

लग्नात्केन्द्रत्रिकोणे वा शुभदृष्टे शुभैर्युते ।
देहसौख्यं महालाभं बन्धुसङ्कीर्णमन्दिरे ॥ ७०
षष्ठाष्टमव्यये राशौ[1] पापयुक्तेऽथवा सति[2] ।
अल्पसौख्यं स्वल्पलाभं चतुष्पाज्जीवनाशनम् ॥ ७१
उत्तरां दिशमाश्रित्य जयापजयमादिशेत् ।
व्यवसायात्फलं नष्टं ज्वरातीसार एव[3] च ॥ ७२
गुह्यरोगो[4] भयं चैव कुजयुक्ते न संशयः ।
अजीर्णरोगपीडा च देहालस्यं मनोव्यथा ॥ ७३
दायेशात्षष्ठरन्ध्रे वा व्यये वा पापसंयुते ।
शुभदृष्टिविहीनश्चेद्धनधान्यपरिच्युतिः ॥ ७४
विदेशगमनं चैव मार्गे रोगभयं तथा ।
व्रणदाहाग्निरोगश्च[5] पापयुक्ते तु नीचगे ॥ ७५
लग्नात्षष्ठाष्टमे[6] रिष्फे व्यये वा पापसंयुते ।
अकस्मात्कलहश्चैव[7] गृहे निष्ठुरभाषणम् ॥ ७६
चतुष्पाज्जीवहानिः स्याद् व्यवहारस्तथैव[8] च ।
अपमृत्युभयं चैव शत्रूणां कलहो[9] भवेत् ॥ ७७
शुभदृष्टे शुभैर्युक्ते दारसौख्यं धनागमम् ।
आदौ शुभकरं चैव मध्ये सौख्यं विनिर्दिशेत् ॥ ७८
अन्ते[10] तु धनहानिश्च स्वल्पसौख्यं च जायते ।
द्वितीयद्यूननराथे वा अपमृत्युर्भविष्यति ॥ ७९

---

1. राशे
2. यदि
3. ज्वरातिसारमेव
4. रोगं
5. रोगं च
6. लग्नाच्षष्ठाष्टमे
7. कलहं चैव
8. व्यवहारं तथैव
9. कलहं
10. अन्त्ये

तद्दोषपरिहारार्थं विष्णुसाहस्रकं जपेत् ।
बुधप्रीतिकरीं[1] चैव शान्तिं कुर्याद्यथाविधि ॥
आयुर्वृद्धिकरीं[2] चैव सर्वसौभाग्यसंपदम् ॥ ८०

ஓலைச்சுவடியில் ஓலைப்பக்கம் 2, வரி 4, இனம் 27

फलम् —

बुधे सौम्यसमायोगे[3] मित्रकार्यसमागमः[4] ।
विद्याविज्ञानविपुलं देहपीडा विनश्यति ॥ ८१

शशितनयदशायां शश्वदाचार्यबन्धु-
द्विजजनितधनाप्तिः[5] क्षेत्रगोवाजिलाभः[6] ।
मनुजपवरपूजावित्तसद्भिश्च सिद्धिः
प्रभवति मरुदुष्णश्लेष्मरोगप्रपीडा ॥ ८२

ग्रन्थान्तरे—

ज्ञानवृद्धिसुखं चैव पाण्डित्यं शास्त्रभेदनम् ।
विवाहः पुत्रसंयुक्तो[7] बुधस्यान्तर्दशाफलम् ॥ ८३

ग्रन्थान्तरे—भृगुः—

स्वोच्चस्वक्षेत्रगे सौम्ये लग्नात्केन्द्रत्रिकोणगे ।
अनेकराजदेशत्व[8]संपन्नो राजपूजितः ॥ ८४
गोमहिष्यादिलाभश्च[9] वस्त्रवाहनभूषणम् ।
नूतनगृहनिर्माणं भाग्यप्राकारसंयुतम् ॥ ८५
गजान्नैश्वर्यसंप्राप्तिः[10] भाग्यकर्मोपसंयुतम्[11] ।
ब्राह्मणप्रभुसंमानं महाराजप्रसादतः[12] ॥ ८६
स्वप्रभोश्च फलाधिक्यं दारपुत्रादिवर्धनम् ।
मातुलादिषु संज्ञत्वं विद्यालाभो[13] महत्सुखम् ॥ ८७

---

1. करं
2. करं
3. समायोगं
4. मित्रकार्यं समागमम्
5. धनार्ति
6. लाभम्
7. विवाहं पुत्रसंयुक्तं
8. देशत्वं
9. लाभं च
10. गजान्तैश्वर्यसंप्राप्तिं
11. संयुते
12. प्रसादकः
13. लाभं

नीचांशे नीचराशिस्थे व्यये षष्ठाष्टराशिगे ।
तद्भुक्त्यादौ राजभीतिः कलहो[1] बन्धुवैरिणाम्[2] ॥ ८८

राजशत्रुविरोधश्च[3] बन्धुनिष्ठुरमेव च ।
कलहेन विचारः स्यात्स्वप्रभोश्चापमृत्युकृत् ॥ ८९

विवादेन मनोदुःखं स्थानभ्रंशो[4] मनोरुजा[5] ।
पितृदारवियोगश्च[6] धनधान्यार्थनाशनम् ॥ ९०

सप्तमाधिपदोषेण अपमृत्युर्भविष्यति ।
तद्दोषपरिहारार्थं विष्णोः साहस्रकं जपेत् ॥ ९१

षष्ठाष्टमव्यये सौम्ये नीचरिप्फारिभांशके ।
मन्दारराहुसंयुक्ते तद्भुक्तौ रोगमादिशेत् ॥ ९२

अकस्मात् कलहं चैव पुत्रमित्रादिनाशनम् ।
स्वबन्धुजनहानिं च[7] सर्वत्र जनपीडनम् ॥ ९३

दायादिकलहं चैव देहे वैकल्यमादिशेत ।
अजीर्णविषभीतिं च[8] मातृवर्गादिपीडनम् ॥ ९४

दायेशात् केन्द्रराशिस्थे त्रिकोणे च समन्विते ।
लाभे वा धनराशिस्थे पापयुक्ते धनक्षयः ॥ ९५

शुभयुक्ते शुभैर्दृष्टे क्षेत्रलाभो[9] महाक्षुधा[10] ।
सुगन्धपरिमल[11]प्रीतिदानविद्याविचक्षणः ॥ ९६

दायेशात् केन्द्ररिप्फे वा षष्ठे वा पापसंयुते ।
विषाग्निनृपचोराणां मूत्रकृच्छ्रं महद्भयम् ॥ ९७

प्रमेहरुधिरं रोगः[12] कुत्सितान्नं शिरोरुजा[13] ।
कारागृहप्रवेशश्च[14] राजदण्डाद्धनक्षयः[15] ॥ ९८

द्वितीयद्यूननाथे वा आत्ममित्रादि[16]पीडनम् ।
दुर्गालक्ष्मीजपं कृत्वा देहारोग्यं शुभावहम् ॥ ९९

---

1. कलहं
2. वैरिणम्
3. विरोधं च
4. भ्रंशं
5. रुजम्
6. वियोगं च
7. हानिश्च
8. भीतिश्च
9. लाभं
10. महत्क्षुधा
11. पादे एकाक्षराधिक्यं लक्ष्यत
12. रोगं
13. रुजम्
14. प्रवेशं च
15. क्षयम्
16. पित्रादि

புததசையில் புதனுடைய அந்தராந்தரபுக்தி மீ 4, தினம் 2, நாழி 49, விநாடி 30

तत्फलम् —

शास्त्रधर्मप्रबोधश्च सत्कारो गुरुदर्शनम् ।
धनधान्यसमृद्धिश्च बुधस्याभ्यन्तरे बुधे ॥ १००

புததசையில் புதனுடைய ஸூக்ஷ்மபுக்தி தினம் 17, நாழி 24, விநாடி...

तत्फलम् —

सौभाग्यं राजसंमानं राजच्छत्रसमन्वितम् ।
सर्वेषां प्रियवादी स्याद् [1]बुधसूक्ष्मदशाफलम् ॥ १०१

புததசையில் புதனுடைய ப்ராணபுக்தி தினம் 2, நாழி 27, விநாடி 30, கலை 6, விகலை 12

फलम् —

[2]वैषम्यं रोगनाशं च शत्रुनाशं शिवार्चनम् ।
समत्वं सर्वभूतेषु बुधप्राणदशाफलम् ॥ १०२

புததசையில் கேதுபுக்தி மீ 11, தினம் 27

फलम् —

दुःखशोककलहाकुलव्यथा-
गात्रकम्पनसुमित्रसंयुतिः[3] ।
क्षेमधान्यवियुतिर्यदा भवे-
च्चन्द्रजन्मशरदागतः[4] शिखी ॥ १०३

अन्यच्च—

यक्षिणागमृतिश्चैव शत्रुमित्रविरोधिता ।
वञ्चनं जनबाहुल्यं बुधस्यान्तर्गते ध्वजे ॥ १०४

ग्रन्थान्तरे—भृगुः—

बुधस्यान्तर्गते केतौ लग्नात्केन्द्रत्रिकोणगे ।
शुभयुक्ते शुभैर्दृष्टे लग्नाधिपसमन्विते ॥ १०५

---

1. बुधस्सूक्ष्म
2. वैषम्यरोग
3. संयुतिम्
4. चन्द्रजन्मशरवाः

स्वल्पसौख्यं स्वल्पलाभं बन्धुस्नेहसमागमम् ।
चतुष्पाज्जीवलाभश्च सञ्चारं राजवैरिणम् ॥ १०६

पश्चिमां दिशमाश्रित्य जयापजयमादिशेत् ।
षष्ठाष्टव्ययराशिस्थे पापयुक्तेऽथ वीक्षिते ॥ १०७

वाहनात्पतनं चैव पितृक्लेश[1]समाकुलम् ।
चोराग्निराजभीतिश्च पापकर्मरति[2]स्तदा ॥ १०८

वृश्चिकादिविषाद्[3]भीतिर्नीचे कलहसंयुतैः ।
शोकरोगादिदुःखं च सञ्चारो[4] भवति ध्रुवम् ॥ १०९

द्वितीयसप्तमस्थे वा देहजाड्यं भविष्यति ।
तद्दोषपरिहारार्थं छागदानं च कारयेत् ॥ ११०

दुःखादिकलहो[5] नित्यं शरीरे क्लेशपीडनम् ।
बुधस्यान्तर्दशायां तु मृगचोरैर्महद्भयम् ॥ १११

*புததசையில் கேதுவினுடைய அந்தராந்தரபுக்தி மீ 1, தினம் 20, நாழி 34, விநாடி 30*

फलम्—

मृत्युना मरणं याति सौभाग्यं धनविच्युतिः ।
राजकोपो महद्भीतिर्बुधस्यान्तर्गते ध्वजे ॥ ११२

*புததசையில் கேதுவினுடைய ஸூக்ஷ்மபுக்தி தினம் 7, நாழி 9, விநாடி 53*

तत्फलम् —

बालग्रहात्प्राणनाशो विशेषेण त्रिदोषवान् ।
अपस्मारप्रवृत्तिश्च [6]बुधसूक्ष्मगते ध्वजे ॥ ११३

*புததசையில் கேதுவினுடைய ப்ராணபுக்தி தினம் 1, நாழி 54, கலை 2, விகலை 37*

फलम् —

दहनं चोरपीडा च अन्नपानाद्विषाद्भयम् ।
देहान्तःकरणैर्नाशो[7] बुधप्राणगते ध्वजे ॥ ११४

---

1. क्लेशं समा
2. कर्मरतस्तदा
3. विषं भीतिः
4. संचारं
5. कलहं
6. बुधस्सू
7. शं

புதத்தையில் சுக்ரபுக்தி வரு 2, மா 10

तत्फलम्—

देवविप्रगुरुपूजनक्रिया दानधर्मनिरतिः समागमः ।
वस्त्रभूषणसुहृद्युतिर्भवेद्बोध[1] आयुषि सितागमे सति ॥ ११५

[2]तत्र शुक्रफलम्—

पश्वादिवस्त्रलाभं च विद्यां[3] मौक्तिकराजतम् ।
धनधान्यमवाप्नोति बुधो शुक्रगतो यदा[4] ॥ ११६

अन्यच्च—

आरोग्यं भूषणं वस्त्रं पुत्रसंपद्धनागमः[5] ।
वाहनं छत्रसंयुक्तं बुधस्यान्तर्गते भृगौ ॥ ११७

ग्रन्थान्तरे—

बुधस्यान्तर्गते शुक्रे केन्द्रलाभत्रिकोणगे ।
उच्चस्वक्षेत्रगे वापि तुङ्गांशे स्वांशकेऽपि वा ॥ ११८
सत्कथाश्रवणं दानं पुण्यधर्मादिसङ्ग्रहम् ।
मित्रप्रभुवशादिष्टं क्षेत्रलाभं ससंभ्रमम् ॥ ११९
कन्यावृश्चिकमासे[6] तु सिंहे चापादिमेषभे ।
नीचमासे ज्वरं किञ्चिद्राजनिष्ठुरमेव च ॥ १२०
उत्तरां दिशमाश्रित्य गमनागमनं शुभम् ।
दशाधिपात्केन्द्रगते त्रिकोणे लाभगेऽपि वा ॥ १२१
तत्काले श्रियमाप्नोति राज्यश्रीधनसंपदम् ।
वापीकूपतटाकादिदानधर्मादिसङ्ग्रहम् ॥ १२२
व्यवसायात्फलाधिक्यं धनधान्यसमृद्धिदम् ।
वैवाहिकं यज्ञकर्म पुत्रकल्याणसंभ्रमम् ॥ १२३
मुक्तामणिप्रवालादि वाहनाम्बरभूषणम् ।
दायेशा[7]त्षष्ठरन्ध्रे वा व्यये वा बलवर्जिते ॥ १२४
शुभेन सहिते दृष्टे देहसौख्यं धनागमम् ।
पापदृ[8]ष्टेऽरिनीचे वा[9] विरोधं राजवैरणम्[10] ॥ १२५

---

1. बोध
2. तत्
3. विद्यामौ
4. यथा
5. मम्
6. मासी
7. शाष्ठ
8. दृष्टारि
9. वयिरो
10. वैरिणम्

हृद्रोगं मानहानिश्च ज्वराती[1]सारपीडनम् ।
संबन्धं मरणं क्लेशं पुत्रदारादिपीडनम् ॥ १२६

अल्पसौख्यं मनस्तापमादायादधिकव्ययम् ।
द्वितीयद्यूननाथश्चेदपमृत्युर्भविष्यति ॥ १२७

तद्दोषपरिहारार्थं शिवसाहस्रकं जपेत् ।
रजतप्रतिमादानं देहारोग्य[2]शुभावहम् ॥ १२८

புதத்தசையில் சுக்ரனுடைய அந்தராந்தரபுக்தி
மீ 5, தினம் 20

फलम् —

ज्ञानसिद्धिश्च[3] पाण्डित्यं नास्तिक्यं ज्ञानमेव च ।
राज्ञां विवाहसंपत्तिर्बुधस्याभ्यन्तरे भृगौ ॥ १२९

புதத்தசையில் சுக்ரனுடைய ஸூக்ஷ்மபுக்தி தினம் 20,
நாழி 28, விநாடி 15

फलम् —

वाहनं बन्धुसंपत्तिर्जलधान्यार्थसञ्चयः ।
शुभदं च महासौख्यं बुधसूक्ष्मगते भृगौ ॥ १३०

புதத்தசையில் சுக்ரனுடைய ப்ராணபுக்தி தினம் 2,
நாழி 54, விநாடி 7

फलम् —

वाहनं बन्धुसंपत्तिर्भूषणं चार्थसंभवः ।
शुभदा च[4] महापूजा[5] बुधप्राणगते भृगौ ॥ १३१

புதத்தசையில் ரவிபுக்தி மீ 10, தினம் 6

तत्फलम्—

शस्त्राग्निनृपबाधां च[6] मृगभूतैर्महद्भयम् ।
ज्वरादिव्याधिमाप्नोति बुधस्यान्तर्गते रवौ ॥ १३२

किञ्च—

हेमविद्रुमतुरङ्गवारणप्राभृतं भवनमन्नपानयुक् ।
भूपतेरपि च पूजनं भवेद्बोध[7] आयुषि हृतेऽब्जबन्धुना ॥ १३३

---

1. रातिसा
2. ग्यं शु
3. द्धिं च
4. दं च
5. पूज्यं
6. धा च
7. बोध

कूपे वा कुक्षिपीडा च निधनं धूर्तसंभवम् ।
गुरूणामतिपीडा च बुधस्यान्तर्गते रवौ ॥ १३४

ग्रन्थान्तरे—

बुधस्यान्तर्गते सूर्ये स्वोच्चस्वक्षेत्रसंयुते ।
केन्द्रत्रिकोणलाभे वा धने वा सोदरे बले ॥ १३५
सर्वराज्यधनप्राप्तिर्गृहे कल्याणसंभ्रमः[1] ।
मित्रराजप्रसादेन ग्रामभूम्यादिलाभकृत् ॥ १३६
गर्भाधानधनप्राप्तिः[2] गृहे लक्ष्मीकटाक्षकृत् ।
भुक्त्यादौ देहआलस्यं[3] ज्वरपीडा भविष्यति ॥ १३८
दायेशाद्रिष्फरन्ध्रे वा व्यये वा पापसंयुते ।
नृपचोराग्निभीतिश्च ज्वररोगादिसंभवः[4] ॥ १३८
गुल्मक्षयादिरोगं च ज्वरातीसारपीडनम् ।
विदेशगमनं चार्तिं लभते पदविभ्रमम् ॥ १३९
द्वितीयद्यूननाथे तु ज्वरपीडा भविष्यति ।
तद्दोषपरिहारार्थं शिवपूजां च कारयेत् ॥ १४०
हिरण्यप्रतिमादानं भूसुराय प्रयच्छति ।
आरोग्यं देहसौख्यं च [5]विप्रं मृष्टेन भोजयेत् ॥
प्रतिमां पट्टवस्त्रं च [6]हारं दद्याच्छुभावहम् ॥ १४१

*புததசையில் ரவியினுடைய அந்தராந்தரபுக்தி*
*தினம்* 15, *நாழி* 18

फलम् —

शोको दारादिपुत्राणां परदारार्थनाशनम् ।
प्राणत्यागश्च[7] मित्राणां बुधस्याभ्यन्तरे रवौ ॥ १४२

*புததசையில் ரவியினுடைய ஸூக்ஷ்மபுக்தி நாழி* 45,
*விநாடி* 58

फलम् —

ताडनं नृपवैषम्याद्बुद्धिस्खलनरोगिता[8] ।
तीव्रज्वरमहाव्याधिर्बुधसूक्ष्मगते रवौ ॥ १४३

---

1. भ्रमं
2. प्राप्तिं
3. हमालस्यं
4. भत्रं
5. मृष्टान्नं विप्रभोजयेत्
6. दारं
7. त्यागं च
8. रोगता

புததசையில் ரவியினுடைய ப்ராணபுக்தி விநடி 25

फलम् —

अन्तर्दाहज्वरोन्मादं बान्धवाश्रान्तिरस्क्रिया । १४४
पापानि रोगसंपत्तिर्बुधप्राणगते रवौ ॥

புததசையில் சந்த்ரனுடையபுக்தி (ஷ) 1, மீ 5

फलम् —

सुवर्णं विजयं काम[1]सौख्यं प्राप्नोति मङ्गलम् ।
धीमान् श्रीमान् जयी नित्यं बुधस्यान्तर्गते विधौ[2] ॥ १४५

अन्यच्च—

देवार्चनं [3]सुतार्थं च शत्रोर्जनसुहृद्रमः ।
सुक्षेत्रसत्कृति[4]धाम बुधस्यान्तर्गते विधौ ॥ १४६

ग्रन्थान्तरे—

बुधस्यान्तर्गते चन्द्रे स्वोच्चस्वक्षेत्रकोणगे ।
शुभदृष्टियुते युक्ते तुङ्गे वा बलसंयुते ॥ १४७
क्षीरान्नं [5]राजसंमानं प्रियवस्त्राश्वलाभकृत् ।
विद्याविनोदसंगोष्ठीधान्यवृद्धिसुखादिकम् ॥ १४८
सन्तानप्राप्तिसन्तोषं[6] वाणिज्यं धनलाभकृत् ।
वाहनं छत्रसंयुक्तं नानालङ्कारभूषणम् ॥ १४९
दायेशात्केन्द्रकोणे वा लाभे वा धनगेऽपि वा ।
विवाहं यज्ञदीक्षां च दानधर्मशुभादिकम् ॥ १५०
दक्षिणां दिशमाश्रित्य प्रयाणं च भविष्यति ।
[7]द्वीपान्तरं च वस्त्रादिलाभ[8]श्चैव भविष्यति ॥ १५१
नीचारिक्षेत्रसंयुक्ते षष्ठाष्टव्ययराशिगे ।
पापग्रहयुते दृष्टे तत्काले धननाशनम् ॥ १५२
स्थानच्युतिः [9]प्रवासश्च देहबाधा भविष्यति ।
दायेशात्केन्द्रकोणे वा दुश्चिक्ये लाभगेऽपि वा ॥ १५३

---

1. कामं
2. शशी
3. नसु
4. कृतीधाम
5. प्राप्नोतीति शेषः
6. प्राप्नोतीति शेषः
7. दीपा
8. लाभं च
9. तिं प्रवासं च

तद्भुक्त्यादौ पुण्यतीर्थस्ना[1]नं चैव तु दर्शनम् ।
मनोधैर्यं महो[2]त्साहो विदेशे धनलाभकृत् ॥ १५४

दायेशा[3]त्षष्ठरन्ध्रे वा व्यये वा पापसंयुते ।
चोराग्निप्राणभीतिश्च कुस्त्रीसंगमनं भवेत् ॥ १५५

दुष्कीर्तिर्मानहानिश्च गोमाहिष्यादिनाशनम् ।
द्वितीयद्यूननाथे वा देहबाधा भविष्यति ॥
तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ॥ १५६

புதகசையில் சந்திரனுடைய அந்தராந்தரபுக்தி
மீ 1. தினம் 12, நாழி 30

वस्त्रान्नदानभूषा[4] च सेवनं प्रभुमन्दिरे ।
भोजनादिषु सौख्यं स्याद् बुधस्याभ्यन्तरे विधौ ॥ १५७

புதகசையில் சந்திரனுடைய ஸூக்ஷ்மபுக்தி
தினம் 3, நாழி 25

फलम् —
सौभाग्यं स्थिरबुद्धिश्च सर्वसंपद्धनागमः[5] ।
सत्कारो गुरुदर्शी च बुधसूक्ष्मगते विधौ ॥ १५८

புதகசையில் சந்திரனுடைய ப்ராணபுக்தி தினம் 1,
நாழி 27, கலை 3

फलम् —
आरोग्यं धनलाभं च वस्त्रलाभं च भूषणम्[6] ।
राजपूज्यो भवेन्नित्यं बुधप्राणगते विधौ ॥ १५९

புதகசையில் குஜபுக்தி மீ 11, தினம் 27

फलम् —
पितृवर्गविनाशं च शत्रुशस्त्रभयज्वरम् ।
चोरान्तकभयं चैव[7] बुधस्यान्तर्गते कुजे ॥ १६०

अन्यच्च—

अग्निभीतिरपि नेत्रजा रुजा
चोरजं भयमतीव दुःखिता ।
मानहानिरथ वातरोगिता[8]
ज्ञायुराहरति[9] मेदिनीसुते ॥ १६१

---

1. र्थे स्था
2. मनोत्साहं
3. शाष्ष्ठ
4. भूषं च
5. गमम्
6. प्राप्नुयादिति शेषः
7. निर्दिशेदिति शेषः
8. रोगता
9. बुधदशान्तर्गत इत्यर्थः

अन्यच्च—

[1]स्त्रीद्यूतं व्यसनं चैव शत्रुभीतिसुदारुणम् । १६२
परक्षोभं मनस्तापं बुधस्यान्तर्गते कुजे ·

ग्रन्थान्तरे—

बुधस्यान्तर्गते भौमे लग्नात् केन्द्रत्रिकोणगे ।
स्वोच्चे वा स्वर्क्षगे भौमे लग्नाधिपसमन्विते ॥ १६३
राजानुग्रहशान्तिश्च गृहे कल्याणसंभ्रमः[2] ।
लक्ष्मीकटाक्षचिह्नानि नष्टराज्यार्थलाभकृत् ॥ १६४
पुत्रोत्सवादिसन्तोषं गृहे गोधनसंकुलम् ।
गृहक्षेत्रादिलाभं च गजवाजिसमन्वितम्[3] ॥ १६५
राजप्रीतिकरं चैव स्त्रीसौख्यादि च भूषणम् ।
नीचारिक्षेत्रसंयुक्ते षष्ठाष्टव्ययगेऽपि वा ॥ १६६
पापदृष्टियुते वापि देहतापं मनोव्यथा ।
उद्योगभङ्गं देहार्तिं स्वग्रामे धान्यनाशनम् ॥ १६७
ग्रन्थिशस्त्रव्रणादीनि तापज्वरव्रणादिकम् ।
दायेशात् केन्द्रकोणे वा भौमे लाभगते सति ॥ १६८
शुभदृष्टे[4] च संप्राप्ते देहसौख्यं धनागमः[5] ।
पुत्रलाभो[6] यशोवृद्धिर्भ्रातृवर्गान्महद्भयम् ॥ १६९
दायेशाद्रिपुरन्ध्रस्थे व्यये वा पापसंयुते ।
तद्भुक्त्यादौ महाक्लेशो[7] मध्ये राजप्रियो भवेत्[8] ॥ १७०
अन्त्ये तु ज्वरभीतिश्च स्थान[9]भ्रंशोऽथवा ध्रुवा ।
द्वितीयद्यूननाथे वा अपमृत्युर्भविष्यति ॥ १७१
अनड्वाहं प्रकुर्वीत मृत्युञ्जयजपं चरेत् ।
सर्वसौख्यकरं नित्यं सर्वसंपत्प्रदायकम् ॥ १७२

---

1. स्त्रीद्यूतमपि व्यसनं
2. सम्भ्रमम्
3. समन्वितः
4. दृष्टिश्च
5. गमम्
6. लाभं
7. क्लेशं
8. प्रियं शुभम्
9. भ्रंशमथापि वा

புதசையில் குஜனுடைய அந்தராந்தரபுக்தி தினம் 20, நாழி 49, வினாடி 30

फलम् —

[1]पतनं मरणं देह[2]मस्तकादिरुजागमम् ।
स्थानच्युतिं महद्भीतिं बुधस्यान्तर्गते कुजे ॥ १७३

புதசையில் குஜனுடைய ஸூக்ஷ்மபுக்தி தினம் 1

फलम् —

अङ्गतश्च विषोत्पत्तिं जडत्वं[3] च दरिद्रता ।
विच्युतिर्गमनं शैलाद् बुधसूक्ष्मगते कुजे ॥ १७४

புதசையில் குஜனுடைய ப்ராணபுக்தி நாழி 1

फलम् —

कुक्षिरोगं दन्तरोगं गुह्यरोगं विषाद्भयम् ।
रोगं च स्थाननाशं च बुधप्राणगते कुजे ॥ १७५

புதசையில் ராஹுபுக்தி வரு 2, மீ 6, தினம் 18

तत्फलम् —

अकस्माच्छत्रुघातं च अकस्मादर्थनाशनम् ।
रक्तपित्तकृतां पीडां[4] बुधस्यान्तर्गते फणौ ॥ १७६

अन्यच्च—

मानहानिरथवा श्रियः[5] च्युतिः
[6]संशयोऽग्निविषतोयजं भयम् ।
मस्तकाक्षिजठरे प्रपीडनं
कन्यकेश्वरदशान्तरे[7]ऽप्यहौ ॥ १७७

अन्यच्च—

वैश्यजायाश्च संसर्गो मन्मथेन विदारणम्[8] ।
दूषकैर्दूषिता वृत्तिर्बुधस्यान्तर्गतेऽप्यहौ ॥ १७८

ग्रन्थान्तरे—

बुधस्यान्तर्गते राहौ केन्द्रलाभत्रिकोणगे ।
कुळीरसिंहगे वापि कन्यायां वृषभे तथा ॥ १७९

---

1. मरणं पतनं 4. ता पीडां 7. वर्षान्तरे
2. देहः 5. श्रियच्युतिः 8. विदारितः
3. जाड्यत्वं 6, 7. साशयो

राजसंमानकीर्तिश्च समरे विजयिष्यति ।
पुण्यतीर्थस्नानफलं देवतादर्शनं तथा ॥ १८०

इष्टापूर्तं[1] च लभते धान्याश्वाम्बरलाभकृत् ।
भुक्त्यादौ देहपीडा च अन्ते सौख्यं विनिर्दिशेत् ॥ १८१

षष्ठाष्टव्ययराशिस्थे तद्भुक्तौ धननाशनम् ।
भुक्त्यादौ दशमासं च शीतज्व[2]रमजीर्णकृत् ॥ १८२

लग्नादुपचये राहौ शुभग्रहसमन्विते ।
राजसंलापसन्तोषं नूतनप्रभुदर्शनम् ॥ १८३

चतुष्पाज्जीवलाभं च सुप्रभोश्च धनागमम् ।
देहारोग्यं धनावाप्तिं[3] यौवनप्रभुदर्शनम् ॥ १८४

निष्ठूरराजकार्याणि स्थानभ्रंशं महद्भयम् ।
बन्धनं रोगपीडा चाप्तबन्धु[4]मनोव्यथा ॥ १८५

हृद्रोगं मानहानिश्च धनहानिर्भविष्यति ।
द्वितीयसप्तमस्थे वा अपमृत्युर्भविष्यति ॥ १८६

तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ।
छागदानं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ १८७

புததசையில் ராஹுவினுடைய அந்தராந்தரபுக்தி மீ 4,
தினம் 17, நாழி 42

फलम् —

शोकदुःखे च कलहो गात्रभेदज्वरो व्रणम् ।
चोरदृष्टि[5]र्विपोत्पत्तिर्बुधस्याभ्यन्तरेऽप्यहौ ॥ १८८

புததசையில் ராஹுவினுடைய ஸூக்ஷ்மபுக்தி தினம் 18,
நாழி 25, விநாடி 25

फलम्—

अग्निदोषान्नृपाद्भीतिः शठव्यापारसङ्गतिः ।
चित्तावेशः क्वचिद्भ्रान्ति[6] र्बुधसूक्ष्मगतेऽप्यहौ ॥ १८९

---

1. पूर्तिं
2. प्रप्नुयादिति शेषः
3. वाप्ति
4. बन्धुर्मनो
5. दृष्टविषो
6. न्तिं

புதததையில் ராஹுவினுடைய ப்ராணபுக்தி தினம் 1, நாழி 36

फलम्—

वस्त्राभरणनाशश्च[1] विप्रबन्धु[2]विरोधिता ।
व्याधिश्च[3] व्रणभूयिष्ठो बुधप्राणगतेऽप्यहौ ॥ १९०

புததசையில் குருபுக்தி வருடம் 2, மீ 3, தினம் 6

तत्फलम्—

विद्यालाभं महाधिक्यं धनं कीर्तिं सुखावहाम्[4] ।
गुरुदेवाग्निपूजां[5] च बुधस्यान्तर्गते गुरौ ॥ १९१

किञ्च—

व्याधिशत्रुदहनच्युतिर्भवेद् ब्रह्मसिद्धिरवनीषु[6] सत्कृतिः ।
धर्मशीलतपसां समुद्भवो ह्यायुराहरति देवमन्त्रिणि ॥ १९२
आरोग्यं वस्त्रलाभं च पुत्रलाभं धनागमम् ।
नृपपूजा भवेन्नित्यं[7] बुधस्यान्तर्गते गुरौ ॥ १९३

ग्रन्थान्तरे—

बुधस्यान्तर्गते जीवे लग्नात्केन्द्रत्रिकोणगे ।
स्वोच्चस्वक्षेत्रगे वापि लाभे वा तुङ्गभांशके ॥ १९४
देहसौख्यं[8] धनप्राप्तिं राजप्रीतिं[9] तथैव च ।
विवाहोत्सवकार्याणि नित्यं मृष्टान्नभोजनम् ॥ १९५
गोमहिष्यादिलाभं च पुराणश्रवणादिकम् ।
देवतागुरुभक्तिश्च दानहोमजपादिकम् ॥ १९६
धर्मादिकर्मसिद्धिश्च शिवपूजाफलं भवेत् ।
नीचे वास्तं गते वापि रन्ध्राष्टव्ययगे तथा ॥ १९७
शन्यारफणिसंयुक्ते कलहं राजविड्भयम्[10] ।
चोराग्निदेहपीडा च पितृमातृविनाशनम् ॥ १९८
मानहा[11]निर्यशोहानी राजदण्डाद्धनक्षयः ।
विषाग्निज्वरपीडा च कृषिगोभूमिनाशनम् ॥ १९९

---

1. शं च
2. न्धुर्वि
3. व्याधितं
4. वहम्
5. पूजा
6. वनीव
7. च मे नित्यं
8. मन
9. प्रीतो
10. विड्वरम्
11. मनोहा

दायेशात्केन्द्रकोणे वा लाभे वा बलसंयुते ।
बन्धुपूजां[1] महोत्साहं शुभशोभनसंपदम् ॥ २००
पशुवृद्धिं यशोलाभमन्नदानादिकं लभेत्[2] ।
दायेशा[3]त्षष्ठरन्ध्रे वा व्यये वा बलवर्जिते ॥ २०१
देहतापश्च वैकल्यं देहबाधा भविष्यति ।
कलत्रबन्धुवैषम्यं राजकोपं धनक्षयम् ॥ २०२
अकस्मान्मृत्युभीतिं[4] च प्रमादं राजविड्वरम् ।
द्वितीयसप्तमेशौ वा देहबाधा भविष्यति ॥ २०३
तद्दोषपरिहारार्थं शिवसाहस्रकं जपेत् ।
गोभूहिरण्यदानेन सर्वारिष्टं व्यपोहति । २०४

புததசையில் குருவினுடைய அந்தராந்தரபுக்தி மீ 3,
தினம் 18, நாழி 38

फलम् —

जपानुष्ठानतात्पर्यमन्नदानफलप्रदम् ।
क्षेत्रार्थपुत्रसंपत्तिर्बुधस्याभ्यन्तरे गुरौ ॥ २०५

புததசையில் குருவினுடைய ஸூக்ஷ்மபுக்தி தினம் 16,
நாழி 22, விநாடி 36

फलम् —

गृहोपकरणं भाग्यं त्यागभोगादिवैभवम् ।
राजप्रसादसंपत्तिर्बुधसूक्ष्मगते गुरौ ॥ २०६

புததசையில் குருவினுடைய ப்ராணபுக்தி தினம் 2,
நாழி 19, விநாடி 21

फलम् —

गुरुसन्तानसंपत्तिर्विद्यालाभो विवाहकम्[5] ।
व्यवसायपराधीनो बुधप्राणगते गुरौ ॥ २०७

புததசையில் சனிபுக்தி வரு 2, மீ 8, தினம் 9

फलम् —

मरणं च महाव्याधिमर्थनाशं मनोभयम् ।
बन्धुनाशं मनोदुःखं बुधस्यान्तर्गते शनौ ॥ २०८

---

1. पूज्यं
2. फलम्
3. व्यष्ठ
4. तिश्च
5. सपत्तिविद्यालाभविवाहता

किञ्च—

अर्थधर्मपरिलिप्तिरुच्चकैः सर्वकार्यमफल[1]त्वमाप्नुयात् ।
श्लेष्मवातजनितो रुगुद्भवो बोधमायुरभियाति सूर्यजे ॥ २०९

अन्यच्च—

शत्रुपीडा सुहृद्बाधा देवब्राह्मणदूषकः ।
भृत्यार्थबहुनाशश्च[2] बुधस्यान्तर्गते शनौ ॥ २१०

ग्रन्थान्तरे—

सौम्यस्यान्तर्गते मन्दे कलहेन मनोव्यथा ।
राजरोषविरोधः स्यात्प्रवासश्च[3] भविष्यति ॥ २११
उग्रकार्यं प्रकुर्वीत पापचिन्ता महद्भयम् ।
उच्चस्वक्षेत्रगे मन्दे केन्द्रलाभत्रिकोणगे ॥ २१२
तुङ्गांशे स्वांशके वापि लग्नाधिपसमन्विते ।
राज्यलाभं महोत्साहं गृहे गोधनसंकुलम् ॥ २१३
वाजिपुष्टिं च सौभाग्यं सेनाधिक्यं महोत्सवम्[4] ।
सेतुस्नानफलप्राप्तिर्भुक्त्यन्तेऽर्थविनाशनम् ॥ २१४
देहपीडा मनस्तापः[5] कार्यनाशो महद्भयम् ।
स्थानभ्रंशमवाप्नोति षष्ठाष्टव्ययराशिगे ॥ १५५
दायेशात्षष्ठरन्ध्रे वा व्यये वा बलवर्जिते ।
करोति दुःखबाहुल्यं दारपुत्रादिपीडनम् ॥ २१६
बुद्धिभ्रमं बन्धुनाशं कर्मनाशं मनोरुजम् ।
विदेशगमनं चैव स्वपदच्युतिकारणम् ॥ २१७
द्वितीयद्यूननाथे तु अपमृत्युर्भविष्यति ।
तद्दोषपरिहारार्थं विष्णुसाहस्रकं जपेत् ॥
शनिप्रीतिकरं चैव तिलदानं च कारयेत् । २१८

புதத்சையில் சனியினுடைய அந்தராந்தரபுக்தி மீ 5,
தினம் 3, நாழி 25, விநாடி 30

फलम् —

प्राणत्यागो महाभीति[6]र्नृपवैषम्यगर्हितः ।
उच्चाटनं च देशाच्च बुधस्याभ्यन्तरे शनौ ॥ २१९

---

1. त्वमङ्गिनाम्
2. नाशं च
3. सं च
4. प्राप्नुयादिति शेषः
5. तापं
6. महद्भीतिः

புதத்தசையில் சனியினுடைய ஸூக்ஷ்மபுக்தி தினம் 24,
நாழி 30

फलम्—

निन्दितो दोषसंयुक्तः[1] पापिष्ठो दोषकारकः ।
राजयक्ष्मादिरोगी स्याद् बुधसूक्ष्मगते शनौ ॥ २२०

சனிதசையில் சனியினுடைய ப்ராணபுக்தி தினம் 3,
நாழி 41, விநாடி 18

फलम्—

चोराग्निशत्रुबाधा च निष्ठुरत्वं दरिद्रता ।
वाचकत्वं विशेषश्च[2] बुधप्राणगते शनौ ॥ २२१

## ॥ अथ केतुदशाफलान्युच्यन्ते ॥

கேதுதசை வருஷம் 7

तत्फलम्—

भार्यापुत्रविनाशनं नरपतेर्भीतिं महत्कष्टतां
विद्याबन्धुधनाप्तमित्रविहतिं[3] चोराग्निमित्रैर्भयम् ।
यानारोहविनाशनं विषजलैः शस्त्रादिभिर्वा भयं
देशाद्देशविवासनं कुलिरुचिं गौल्यादिभिर्वा वधम् ॥ १

केतोर्दशायां प्राप्तायां दारपुत्रविनाशनम् ।
राजकोपं मनस्तापं चोराग्निं कृषिनाशनम्[4] ॥ २

केन्द्रस्थितदशा केतोः करोति विफलक्रियाम् ।
राज्यार्थसुतदाराणां नाशनं विपदं तथा ॥ ३

वाक्पारुष्यं मनोदुःखं कुत्सितान्नं शिरोरुजम् ।
क्रूरराशिगतस्यापि केतोर्दाये सुखक्षयम् ॥ ४

प्रभ्रमदारपुत्रादि गृहधान्यप्रधर्षणम्[5] ।
पञ्चमस्थस्य केतोस्तु दशाकाले सुतक्षयम् ॥ ५

बन्धुभ्रंशं विशेषेण राजकोपाद्धनक्षयम् ।
केतोस्त्वरिगतस्यापि दशायां महदापदः[6] ॥ ६

---

1. क्तो
2. षं च
3. विहतिः
4. विद्यादिति शेषः
5. प्रकर्षितम्
6. पदम्

चोराग्निविषभीतिः स्याद्रणाद्भयमुपैति च ।
कलत्रराशिसंयुक्त[1]केतोर्दाये महद्भयम् ॥ ७

दारपुत्रार्थनाशं च मूत्रकृच्छ्रं मनोरुजम् ।
केतोरष्टमयुक्तस्य दशाकाले महद्भयम् ॥ ८

स्थाननाशः[2] पितुर्मृत्युः श्वासकाशक्षयान्वितः ।
नवमस्थस्य केतोस्तु दशाकाले पितुर्विपत् ॥ ९

गुरोर्वा विपदो[3] दुःखं शुभकर्मविनाशनम् ।
कर्मस्थकेतोः[4] संप्राप्ते दाये सौख्यं करोति च ॥ १०

मातृवर्गातिसौख्यं च यज्ञं दानविवर्धनम् ।
रिःफस्थकेतौ संप्राप्ते दाये कष्टतरं भवेत् ॥ ११

स्थानच्युतिं प्रवासं च राजपीडाक्षिनाशनम् ।
दशादौ दुःखमाप्नोति दशामध्ये महद्भयम् ॥ १२

दशान्ते राजभीतिः स्याद्देहनाशमथापि वा ।
शुभवीक्षणसंयुक्तः केतुः सौख्यं करोति च ॥
ज्वरातिसारमेहं च त्वग्दोषं चोरपीडनम् ॥ १३

[5]भोगस्य नाशं च शरीरदुःखं
द्रव्यस्य हानिमृतिकष्टपरम्परां च ।
रोगं[6] च बन्धुकलहप्रद्मानुषा [7]च
पुंसां दशा भवति केतुफलं च कष्टम् ॥ १४

अन्यच्च—

क्षयश्च चित्तभूखेदः स्त्रीजातश्च दरिद्रता ।
शून्यत्वं विषभीतिश्च केतोरादिदशाफलम् ॥ १५

ग्रन्थान्तरे—

केन्द्रत्रिकोणलाभे वा केतुदाये महत्सुखम् ।
देशग्रामाधिपत्यं च वाहनं पुत्रसंभवम् ॥ १६

देशान्तरप्रयाणं च अन्यदेशे सुखावहम् ।
पुत्रदारसुखं चैव चतुष्पाज्जीवलाभकृत् ॥ १७

---

1. क्तः के
2. नाशं
3. विपदं
4. केतुसं
5. भोगव्यभोगव्यभोग
6. रोगी च
7. मानुषाश्च

दुश्चिक्ये षष्ठलाभे वा केतोर्दाये सुखं भवेत् ।
राज्यं करोति मित्राप्तिं गजवाजिसमन्वितम् ॥ १८

दशादौ राजयोगं च दशामध्ये महद्भयम् ।
अन्ते दूरागमं चैव [1]देशाविभ्रमणं तथा ॥ १९

शुभदृष्टियुते दृष्टे भाग्यकर्मेशसंयुते ।
पुण्यतीर्थफलं वापि गङ्गास्नानादिकं तथा ॥ २०

धनरन्ध्रे व्यये केतौ पापदृष्टियुतेक्षिते ।
निगळं बन्धुनाशं च स्थानभ्रंशं मनोरुजम् ॥ २१

क्षुद्रशून्यादिबाधां[2] च पाण्डुरोगमथापि वा ।
क्षायापस्मारकुष्ठादिविषभीतिं [3]महद्भयम ॥ २२

கேதுதசையில் கேதுபுக்தி மா° 4, தினம் 27

तत्फलम् —

बहुजनसेवनं च कूपादिजलसेवनम् ।
क्षेत्रदोषः[4] कुमार्गश्च[5] दुष्टस्त्रीसेवनं तथा ॥ २३

स्फोटकादिव्रणोत्पत्तिविच्छित्तिप्राणसंशयाः[6] ।
अग्निरोगादिपीडा च केतोरन्तर्दशाफलम् ॥ २४

रेतोहानिः पुत्रनाशो[7] धनहानिश्च विग्रहः[8] ।
भयं राजकुले नाशः[9] केतोरन्तर्दशाफलम् ॥ २५

ग्रन्थान्तरे—

शिखिजनितदशायां शोकमोहाङ्गनार्तिः
प्रभुकृतपरिपीडा वित्तनाशः[10] कफार्तिः ।
प्रभवति [11]तनु भाजां प्रस्थितिः[12] स्वीयदेशात्
दशनचरणरोगः[13]कुक्षिरुन्मूत्रकृच्छ्रा[14] ॥ २६

ग्रन्थान्तरे—

केन्द्रत्रिकोणलाभे वा लग्नाधिपसमन्विते ।
भाग्यकर्मेशसंबन्धे भाग्ये केतुसमन्विते ॥ २७

---

1. देहवि
2. बाधा
3. तिर्भ
4. दोषं
5. मार्गं च
6. संशयः
7. नाशं
8. विग्रहम्
9. नाशं
01. पित्तनाशं
11. ननुभजजां
12. प्रथितस्वी
13. रोगं
14. कृच्छ्रम्

तद्भुक्त्यां पुण्यतीर्थे च स्नानं दैवतदर्शनम् ।
युद्धयात्राप्रसङ्गश्च समरे विजयिष्यति ॥ २८
तस्य योगप्रभावेण राजानुग्रहवैभवम् ।
इष्टापूर्तिश्च[1] महती यानाम्बरविभूषणम् ॥ २९
भुक्त्यादौ देहपीडा च अन्ते सौख्यं विनिर्दिशेत् ।
षष्ठाष्टव्ययराशिस्थे तद्भुक्तौ धननाशनम्[2] ॥ ३०
देशान्तरप्रयाणं च दारपुत्रादिपीडनम् ।
अन्तर्दाहमतिक्लेशः[3] केतोरन्तर्दशाफलम् ॥ ३१
द्वितीयसप्तमस्थे वा अपमृत्युर्भविष्यति ।
तद्दोषपरिहारार्थं छागदानं च कारयेत् ।
महामृत्युञ्जयो [4]जप्यः केतुप्रीतिं च कारयेत् ॥ ३२

கேதுதசையில் கேதுவினுடைய அந்தராந்தரபுக்தி
தினம் 8, நாழி 34, விநாடி 30

तत्फलम्—

कपालदन्तरोगश्च[5] मूत्राच्चेन्मृत्युसंभवः ।
स्थानच्युतिः प्राणहानिरन्तरान्तर्गते ध्वजे ॥ ३३

கேதுதசையில் கேதுவினுடைய ஸூக்ஷ்மபுக்தி
நாழி 29, விநாடி 2

तत्फलम्—

दारपुत्रादिविच्छित्तिर्गोत्रवैषम्यमेव च ।
दारिद्र्यं [6]याचनावृत्तिः केतोः सूक्ष्मदशाफलम् ॥ ३४

கேதுதசையில் கேதுவினுடைய ப்ராணபுக்தி
நாழி 1, விநாடி 3

तत्फलम्—

देहपीडां च सन्तापं वस्त्राभरणनाशनम् ।
अनेकजनसंवादं केतोः प्राणगते ध्वजे[7] ॥ ३५

---

1. पूर्तिं च
2. नाशनः
3. क्लेशं
4. जयं जप्यम्
5. कपालं दन्तरोगं च
6. याचकात्
7. विद्यादिति शेषः

கேதுதசையில் சுக்ரபுக்தி வரு 1, மா 2

तत्फलम्—

नववस्त्रैः समायोगः[1] स्त्रीवार्ता मधुरा शुभा[2] ।
रोगनाशं मनःकाम्यं अङ्गनाभिः सुपूजितम् ॥ ३६
क्षेत्रं पुत्रांश्च दारांश्च सेनापत्यं धनागमम् ।
[3]पश्यतीश्वरभक्तिश्च केतोरन्तर्गते भृगौ ॥ ३७

अन्यच्च—

केतोः शुक्रगतौ [4]सौख्यं विवाहे बन्धुसंगमः[5] ।
राजप्रीतिशुभं चैव जायते देवपूजनम् ॥ ३८

ग्रन्थान्तरे—

द्विजवरकलहः स्त्रिया विरोधः[6]
स्वकुलजनैरपि कन्यकाप्रसूतिः ।
[7]परिभवजननं परोपतापो
विशति भृगौ शिखिवत्सरान्तरालम् ॥ ३९

केतोरन्तर्गते शुक्रे केन्द्रलाभत्रिकोणगे ।
उच्चस्वक्षेत्रगे वापि पुत्रदारादिवर्धनम् ॥ ४०
राजप्रीतिं च भाग्यं च गजाश्वाम्बरसंकुलम् ।
तत्काले श्रियमाप्नोति भाग्यकर्मेशसंयुते ॥ ४१
नष्टराज्यधनप्राप्तिः सुखवाहनमुत्तमम् ।
सेतुस्नानादिकं[8] चैव देवतादर्शनं महत् ॥ ४२
महाराजप्रसादेन ग्रामभूम्यादिलाभकृत् ।
नीचस्थखेटसंयुक्ते पापयुक्तेऽथ वीक्षिते ॥ ४३
षष्ठाष्टव्ययराशिस्थे [9]हृद्रोगजयहानिकृत् ।
धनधान्यादिनाशश्च[10] दारपुत्रपशुक्षयः ॥ ४४
उत्पातो[11] विषभीतिश्च मनश्चाञ्चल्यमेव[12] च ।
दायेशात्केन्द्रकोणे वा दुश्चिक्ये लाभगेऽपि वा ॥ ४५

1. समायुक्तम्
2. मधुरं शुभम्
3. वश्यती
4. गते
5. सगमम्
6. विरोधं
7. परभव
8. धिकं
9. गंजय
10. नष्टं च
11. उत्पातं
12. चञ्चलमेव

देहारोग्यं सुखं चैव गृहे कल्याणशोभनम् ।
भोजनाम्बरपश्वादि अन्ते क्लेशकरं भवेत् ॥ ४६

दायेशाद्रन्ध्ररिष्फे वा देहजाड्यं मनोरुजम्[1] ।
षष्ठे पापसमायुक्ते [2]अकस्मात्कलहो[3] भवेत् ॥ ४७

धनधान्यादिपीडा [4]च स्वबन्धुजनवैरकम्[5] ।
द्वितीयद्यूननाथे तु देहजाड्यं मनोरुजा[6] ॥ ४८

तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ।
आयुर्वृद्धियशस्सौख्य[7] सर्वसंपत्प्रदायकम् ॥ ४९

கேதுதசையில் சுக்ரனுடைய அந்தராந்தரபுக்தி
மீ 2, தினம் 10

फलम्—

भैषज्याद्रोगनाशश्च[8] स्थानप्राप्तिश्च वैभवः ।
राजयक्ष्मादिनाशश्च केतोरभ्यन्तरे भृगौ ॥ ५०

கேதுதசையில் சுக்ரனுடைய ஸூக்ஷ்மபுக்தி தினம் 1,
நாழி 24, விநாடி 5

फलम्—

पुत्रलाभोः रोगनाशो द्विजजन्मप्रवर्तनम्:[9] ।
पुण्यकीर्तिः सुहृत्सङ्गः केतोः सूक्ष्मगते भृगौ ॥ ५१

கேதுதசையில் சுக்ரனுடைய ப்ராணபுக்தி
நாழி 4, விநாடி 54, தத்பரை 20

फलम्—

वृक्षात्पतनघातश्च[10] पादस्खलनमेव च ।
निर्विचारविषोत्पत्तिः केतोः प्राणगते भृगौ ॥ ५२

கேதுதசையில் ரவிபுக்தி மீ 4, தினம் 6

तत्फलम्—

वृक्षेण [11]पीडनं देह[12] अकाले मरणं ध्रुवम् ।
अन्यथा चोरबाधा च [13]गृहे स्यादग्निभयं न च[14] ॥ ५३

---

1. आप्नुयादिति शेषः
2. आक
3. कलहं
4. पीडां च
5. वैरिणं
6. रुजम्
7. सौख्यं
8. नाशं च
9. प्रवर्तकः
10. घातं च
11. पीडितं
12. देहैमकारे
13. गृहस्या
14. ध्रुवम्

आत्मनः पुत्रदारेषु[1] ज्वरापस्मारसंभवः ।
अन्नदानादिके पीडा[2] केतोरन्तर्गते रवौ ॥ ५४

अन्यच्च—
अग्निदाहज्वरं घोरं विदेशगमनं पुनः ।
राजबाधा भवेद् दुःखं केतोरेव रविर्यथा ॥ ५५

अन्यच्च—
गुरुजनभरणं ज्वरावतारं
स्वजनवियोगं विदेशयानलाभम् ।
नृपकृतकलहं कफानिलार्तिं
विशति रवौ शिखिवत्सरान्तरालम् ॥ ५६

ग्रन्थान्तरे—
केतोरन्तर्गते सूर्ये स्वोच्चस्वक्षेत्रमित्रगे ।
केन्द्रत्रिकोणलाभे वा शुभदृष्टिसमन्विते ॥ ५७
धनधान्यादिलाभं च राजानुग्रहवैभवम् ।
अनेकशुभकार्याणि इष्टसिद्धिः सुखावहा[3] ॥ ५८
गृहे कल्याणसंपत्ति र्दारपुत्रादिसौख्यकृत्[4] ।
षष्ठाष्टव्ययराशिस्थे पापग्रहसमन्विते ॥ ५९
तद्भुक्तौ राजभीतिश्च पितृमातृविनाशनम् ।
देशान्तरपरिभ्रंशः[5] चोराग्निविषपीडनम् ॥ ६०
राजमन्त्रिविरोधश्च राजदण्डाद्धनक्षयः[6] ।
शिरोरोगो[7] जनक्लेश[8] उष्णाधिक्यं सुखक्षयः[9] ॥ ६१
चतुष्पाज्जीवहानिः स्यात् स्ववारे क्लेशमाप्नुयात् ।
मन्दवारे मनस्तापः[10] सोमवारे मनोव्यथा[11] ॥ ६२
भुक्त्यन्ते सौख्यमाप्नोति स्वल्पलाभं च विन्दति ।
दायेशात्केन्द्रकोणे वा दुश्चिक्ये लाभगेऽपि वा ॥ ६३

---

1. दारं च
2. कं पीडा
3. वहम्
4. दम्
5. भ्रंशं
6. क्षयम्
7. रोगं
8. क्लेशं
9. क्षयम्
10. तापं
11. व्ययम्

देहसौख्यमर्थलाभं पुत्रलाभं शिरोरुजम् ।
स्वल्पकार्याल्पसिद्धिं [1]च स्वल्पग्रामाधिपत्यताम् ॥ ६४

दायेशात्[2]षष्ठरिःफे वा रन्ध्रे वा पापसंयुते ।
अन्नविघ्नं महत्कार्यं कृषिविघ्नं धनक्षयम् ॥ ६५

कारागृहादिभीतिं च[3] चोराग्निप्राणपीडनम् ।
आदौ मध्ये महत्कष्ट मन्ते सौख्यं विनिर्दिशेत् ॥ ६६

द्वितीयाधिपदोषेण सप्तमाधिपसंयुते ।
कालमृत्युभयप्राप्तिः सूर्यप्रीतिकरं जपेत् ॥ ६७

शिवपूजा भवेत्तस्य शान्तिं कुर्याद्यथाविधि ।
आयुस्सौख्यं सुसौभाग्यं दारपुत्रसुखानि च[4] । ६८

*கேதுதசையில் ரவியினுடைய அந்தராந்தரபுக்தி*
*தினம் 6, நாழி 18*

फलम्—

पितृमातृविनाशं च शत्रुपीडा ज्वरेण वा ।
अतिसारातिबाधा च केतोरभ्यन्तरे रवौ ॥ ६९

*கேதுதசையில் ரவியினுடைய ஸூக்ஷ்மபுக்தி*
*நாழி 25, விநாடி 30*

फलम् —

युद्धभीति[5]र्विनाशश्च देशान्तरपरिभ्रमः ।
पितृमातृविभक्तिश्च केतोः सूक्ष्मगते रवौ ॥ ७०

*கேதுதசையில் ரவியினுடைய ப்ராணபுக்தி*
*நாழி 28, தத்பரை 18*

फलम्—

तोयाग्निरिपुशस्त्रादिविभीतिर्दीर्घरोगता[6] ।
प्राणसंशयपीडा च केतोः प्राणगते रवौ ॥ ७१

*கேதுதசையில் சந்த்ரபுக்தி மீ 7*

फलम् —

मात्रादिभिश्च संमानो[7] मातुलस्य धनागमः ।
वाहनं बन्धुकल्याणं ब्राह्मणैः सह भोजनम् ॥ ७२

---

1. सिद्धिः स्यात्
2. शाष्ष्ठ
3. भीतिश्च
4. सुखावहम्
5. भूमिविनाशं च
6. रोगवान्
7. समानं

ज्ञानमीश्वरभक्तिश्च रोगार्तो[1] मुच्यते नरः ।
शीतरोगादिभीतिश्च केतोरन्तर्गते विधौ ॥ ७३

किञ्च—

भयहानिश्चार्थलाभः[2] सुखदुःखधनागमः ।
स्त्रीलाभः [3]पुत्रलाभश्च[4] केतोरन्तर्गते विधौ[5] ॥ ७४

अन्यच्च—

केतोरन्तर्गते चन्द्रे स्वक्षेत्रे स्वोच्चराशिगे ।
केन्द्रत्रिकोणलाभे वा शुभग्रहसमन्विते ॥ ७५

राज्यलाभं महोत्साहं कल्याणं च महत्सुखम् ।
राजसंमानकीर्तिं[6] च स्त्रीसौख्यं याति शोभनम् ॥ ७६

भोजनाम्बरपश्वादिस्थानवृद्धिसुखादिकम्[7] ।
अश्ववाहनयोगं [8]च वस्त्राभरणभूषणम् ॥ ७७

देवालयतटाकादिपुण्यधर्मादिसङ्ग्रहम् ।
राज्यलाभं महोत्साहं गृहे लक्ष्मीकटाक्षकृत् ॥ ७८

पुत्रदारादिसौभाग्यं पूर्णचन्द्रस्तथैव च ।
नीचे वा क्षीणचन्द्रे वा षष्ठाष्टव्ययगेऽपि वा ॥ ७९

स्वल्पसौख्यं मनस्तापं कार्यविघ्नं महद्भयम् ।
पितृमातृविनाशं च देहजाड्यं मनोव्यथाम्[9] ॥ ८०

शुभैर्युक्ते शुभैर्दृष्टे सौख्यं च धनवर्धनम् ।
तामसात्कार्यसिद्धिः स्याद् गृहे गोधनसंकुलम् ॥ ८१

भुक्त्यादौ शुभमारोग्यं मध्ये राजप्रियं सुखम् ।
अन्ते तु राजभीतिश्च पापयुक्ते तु नीचगे ॥ ८२

दायेशात्केन्द्रकोणे वा लाभे वा बलसंयुते ।
कृषिगोभूमिलाभं च विद्याबन्धुसमागमम् ॥ ८३

शुभयुक्ते नृपप्रीतिं विचित्राम्बरभूषणम् ।
वाहनं भूमिलाभं च गन्धमाल्याम्बरादिकम् ॥ ८४

---

1. रोगान्ते
2. लाभं
3. लाभं
4. लाभं
5. शशी
6. कीर्तिश्च
7. धिकम्
8. योगश्च
9. व्यथा

देशयात्रादिसञ्चारं स्वबन्धुजनसंश्रयः[1] ।
दायेशात्[2] षष्ठरिःफे वा रन्ध्रे वा बलवर्जिते ॥ ८५
धनधान्यादिहीनिश्च[3] मनोऽव्याकुलमेव च ।
विप्रद्वेषं च कोपं च गौल्यादिपतनं तथा ॥ ८६
स्वबन्धुजनमित्रत्वं शिरार्तिगुदपीडनम् ।
भुक्त्यादौ स्वल्पसौख्यं च मध्यान्ते क्लेशमादिशेत् ॥ ८७
निधनाधिपदोषेण सर्वकार्यविनाशनम् ।
तद्दोषपरिहारार्थं दुर्गासूक्तजपं चरेत् ।
चन्द्रप्रीतिकरं चैव चन्द्रप्रीतिजपं चरेत् ॥ ८८

கேதுதசையில் சந்த்ரனுடைய அந்தராந்தரபுக்தி
தினம் 17, நாழி 30

फलम् —

कीर्तिवृद्धिधनज्ञान[4]शास्त्राभ्यासं सुसङ्गमम् ।
सौजन्यं चैव वाणिज्यं केतोरभ्यन्तरे विधौ ॥ ८९

கேதுதசையில் சந்த்ரனுடைய ஸூக்ஷ்மபுக்தி
நாழி 42, விநாடி 2

फलम्—

दासीदाससमृद्धिश्च युद्धलब्धजयस्तथा[5] ।
संपत्तिः कीर्तिरुत्पन्नस्तथा[6] केतोः सूक्ष्मगते विधौ ॥ ९०

கேதுதசையில் சந்த்ரனுடைய ப்ராணபுக்தி நாழி 2,
விநாடி 27, தற்பரை 10

द्विजदेवप्रपूजा च तीर्थयात्रारतिं [7]तथा ।
कटिरोगं नेत्ररोगं केतोः प्राणगते विधौ ॥ ९१

கேதுதசையில் குஜபுக்தி மீ 4, தினம் 27

फलम्—

गोनाशं गुल्मरोगं च वातरोगप्रपीडनम्[8] ।
अन्यथा क्षयरोगित्वं[9] देहनाशं समादिशेत् ॥ ९२

---

1. आश्रितम्
2. शाष्ष
3. हीनश्च
4. ज्ञानं
5. जयास्तथा
6. रुत्पन्नो
7. रतिस्तथा
8. वातजं रोगपीडनम
9. रोगत्वं

भूमिनाशमपस्मारं बन्धनं राष्ट्रभेदनम् ।
रज्जुशस्त्रप्रपीडां[1] च केतोरन्तर्गते कुजे ॥ ९३

गोत्रजैः सह संवादं चोराग्निपतनं व्रणम् ।
शरीरे तापदाहं च केतोरन्तर्गते कुजे ॥ ९४

गोत्रजैः सह संवादं चोराग्निपतनं व्रणम् ।
शरीरे तापदाहं च केतोरन्तर्गते कुजे ॥ ९५

अन्यच्च—

स्वकुलजनकलहं स्वबन्धुनाशं
भयमपि पन्नगजं भयं च[2] चोरात् ।
हुतवहभवशस्त्रपित्तपीडा
[3]वसति कुजे[4] ध्वजनामखेचरा ये[5] ॥ ९६

ग्रन्थान्तरे—

चोरराजभयं मृत्युर्बन्धुनाशं रिपोर्भयम् ।
पुत्रदाररतिर्नित्यं[6] केतोरन्तर्गते कुजे ॥ ९७

ग्रन्थान्तरे—

केतोरन्तर्गते भौमे लग्नात्केन्द्रत्रिकोणगे ।
स्वोच्चस्वक्षेत्रगे भौमे शुभदृष्टियुतेक्षिते ॥ ९८

आदौ शुभफलं चैव ग्रामभूम्यादिलाभकृत् ।
गृहक्षेत्रं भूमिलाभं राजानुग्रहवैभवम् ॥ ९९

षष्ठाष्टमव्यये भौमे नीचे पापसमन्विते ।
ज्वराग्निशस्त्रपीडा च शत्रुवृद्धि[7]स्तथैव च ॥ १००

अपस्मारपिशाचादिरुन्मादो [8]भ्रान्तिपीडनम् ।
स्थानच्युतिं प्रयाणं च विरोधं बन्धुभिस्तथा ॥ १०१

अकस्मात्कलहं चैव अशुभं व्याधिपीडनम् ।
भाग्यकर्मेशसंबन्धे भूलाभं सौख्यमेव च ॥ १०२

दायेशात्केन्द्रकोणे वा दुश्चिक्ये लाभगेऽपि वा ।
राजप्रीतिं यशोलाभं पुत्रमित्रादिसौख्यकृत् ॥ १०

---

1. पीडा च
2. भवन्ति
3. व्रजन्ति
4. कुजो
5. रायुः
6. रतो नित्यं
7. वृद्धिकरं तथा
8. उन्मत्तो

षष्ठाष्टमव्यये भौमे दायेशाद्धनगेऽपि वा ।
भ्रान्ति [1]करोति मरणं विदेशे वा परिभ्रमम् ॥ १०४

प्रमेह[2]मूत्रगुल्यादिराजचोराग्निपीडनम् ।
फलमादौ तथान्ते तु किञ्चित्सुखविवर्धनम् ॥ १०५

करोति विविधं दुःखं आद्यभुक्त त्वनन्तरम् ।
द्वितीयद्यूननाथे वा तापज्वरविषाद्भयम् ॥ १०६

दारपीडा महाक्लेशश्चापमृत्युभयं[3] भवेत् ।
अनड्वाहं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ १०७

கேதுதசையில் குஜனுடைய அந்தராந்தரபுக்தி
தினம் 8, நாழி 24

फलम् —

रक्तातिसारहिक्का[4]दिप्लीहकुष्ठव्रणादिकम् ।
भूतोपद्रवदोषश्च केतोरभ्यन्तरे कुजे ॥ १०८

கேதுதசையில் குஜனுடைய ஸூக்ஷ்மபுக்தி நாழி 29
விநாடி 25

फलम्—

अशनेर्विषभीतिश्च दुष्टचोरादिपीडनम ।
गुल्मरोगं शिरोरोगं केतोः सूक्ष्मगते कुजे ॥ १०९

கேதுதசையில் குஜனுடைய ப்ராணபுக்தி
நாழி 1, விநாடி 43

फलम् —

तीव्ररोषः शत्रुवृद्धिरसाध्याङ्गनिपीडिता ।
अन्नपानादिविरुचिः केतोः प्राणगते कुजे ॥ ११०

கேதுதசையில் ராகுபுக்தி வருஷ 1, தினம் 18

फलम् —

भूतावेशं क्वचिद्भ्रान्ति मूत्रस्रावं क्वचिद्भयम् ।
चोरराजभयं चैव केतोरन्तगतेऽप्यहौ ॥ १११

चोरैर्वा शस्त्रकलहं देशत्यागं च दुर्वचः ।
बन्धुभिः सह संवादं केतोरन्तर्गते फणौ ॥ ११२

---

1. भ्रान्तिः
2. प्रमोह
3. क्लेशमप
4. हिक्कादी प्रीह

पन्थान्तरे—

हरिवरखलनृपाग्निचोरैर्भयमपि पन्नगजं वदन्ति तस्मिन् ।
खलतरवचनं दुरिष्टचेष्टा तमसि गतेऽत्र शिखीतृजातमायुः ॥ ११३

अन्यच्च—

भूमिनाशमपस्मारं बन्धनं राष्ट्रभेदनम् ।
मृत्युशत्रुप्रपीडा च केतोरन्तर्गतेऽप्यहौ ॥ ११४

पन्थातरे—

केतोरन्तर्गते राहौ स्वोच्चमित्रस्वराशिगे ।
केन्द्रत्रिकोणलाभे वा दुश्चिक्ये बलसंयुते ॥ ११५
तत्काले धनलाभः स्यात् सञ्चारो भवति ध्रुवम् ।
म्लेच्छप्रभुवशात्सौख्यं स्वग्रामे धनसंपदम् ॥ ११६
चतुष्पाज्जीवलाभं च ग्रामभूम्यादिलाभकृत् ।
भुक्त्यादौ क्लेशमाप्नोति मध्येऽन्ते सौख्यमाप्नुयात् ॥ ११७
षष्ठाष्टमगते राहौ व्यये पापसमन्विते ।
बहुमूत्रकृशं देहं शीतज्वरविषाद्भयम् ॥ ११८
चातुर्थिकीज्वरं चैव क्षुद्रोपद्रवमेव च ।
अकस्मात्कलहं चैव प्रमेहं गुल्ममेव च ॥ ११९
द्वितीयसप्तमस्थे वा दारक्लेशो भविष्यति ।
तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ।
आयुष्यहोमं कुर्वीत सर्वसंपत्प्रदायकम् ॥ १२०

கேதுதசையில் ராஹுவினுடைய அந்தராந்தரபுக்தி
மீ 1, தினம் 26, நாழி 42

फलम्—

भूतावेशं क्वचिद्भ्रान्तिं मूत्रस्रावं क्वचिद्भयम् ।
चोररोगभयं चैव केतोरभ्यन्तरेऽप्यहौ ॥ १२१

கேதுதசையில் ராஹுவினுடைய ஸூக்ஷ்மபுக்தி
தினம் 7, நாழி 56

फलम्—

विनाशो स्त्रीगुणानां च दुष्टदोषविवर्धनम् ।
दहनं रुधिरं पित्तं केतोः सूक्ष्मगतेऽप्यहौ ॥ १२२

கேதுதசையில் ராஹுவினுடைய ப்ராணபுக்தி
தினம் 2, நாழி 25

फलम्—

शस्त्रव्रणं सुहृत्पीडा अधनं स्त्रीवियोगता ।
गजवाजिवियोगश्च केतोः प्राणगतेऽप्यहौ ॥ १२३

கேதுதசையில் குருவினுடையபுக்தி மீ॰ 11, தினம் 6

फलम्—

माणिक्यादिसमुत्पन्नं पुत्रसौख्यं सदा शुभम् ।
केदारेण महत्सौख्यं बन्धुभिः सह भोजनम् ॥ १२४
विवाहं भूमिलाभं च शत्रुनाशं शिवार्चनम् ।
कल्याणं कीर्तिरुत्पन्नं केतोरन्तर्गते गुरौ ॥ १२५

किञ्च—

द्विजेन्द्रैः सह संयोगो राजपूजा महाधनम् ।
कुलस्त्रीपुत्रलाभश्च केतोरन्तर्गते गुरौ ॥ १२६

ग्रन्थान्तरे—

सुतवरजननं नरेन्द्रपूजा
युवतिधनाप्तिरिवयुनार्थसिद्धिः ।
धनचयजननं द्विजेन्द्रपूजा
भवति गतेऽत्र गुरौ शिखीन्द्रदाये ॥ १२७

अन्यच्च—

केतोरन्तर्गते जीवे केन्द्रलाभत्रिकोणगे ।
स्वोच्चस्वक्षेत्रगे वापि लग्नाधिपसमन्विते ॥ १२८
कर्मभाग्याधिपैर्युक्ते धनधान्यार्थसंपदम् ।
राज्यप्राप्तिं महोत्साहमश्वान्दोल्यादिलाभकृत् ॥ १२९
गृहे कल्याणसंपत्तिं पुत्रलाभं महोत्सवम् ।
पुण्यतीर्थफलप्राप्तिं सत्कर्म च शुभादिकम् ॥ १३०
इष्टदेवप्रसादेन विजयं कार्यसाधनम् ।
महाराजप्रसादेन इष्टसिद्धिसुखावहम् ॥ १३१
राजसंलापसन्तोषं गृहे लक्ष्मीकटाक्षकृत् ।
षष्ठाष्टमगते जीवे दाये वा नीचगेऽपि वा ॥ १३२

चोराग्निरणभीतिश्च धनधान्यार्थनाशनम् ।
पुत्रदारविरोधश्चातिक्लेशस्य च संभवः ॥ १३३

स्थानभ्रंशो मनोदुःखं सोदराणां विनाशनम् ।
आदौ शुभकरं चैव अन्ते क्लेशकरं भवेत् ॥ १३४

दायेशात्केन्द्रकोणे वा दुश्चिक्ये लाभगेऽपि वा ।
शुभयुक्ते नृपात्प्रीतिं विचित्राम्बरभूषणम् ॥ १३५

वाहनं भूमिलाभं च गन्धमाल्यादिभूषणम् ।
दूरदेशप्रयाणं च स्वबन्धुजनपोषकम् ॥ १३६

भोजनाम्बरपश्वादि भुक्त्यादौ फलमीदृशम् ।
अन्ते तु स्थानचलनमकस्मात्कलहो भवेत् ॥ १३७

द्वितीयद्यूननाथे वा अपमृत्युर्भविष्यति ।
तद्दोषपरिहारार्थं शिवसाहस्रकं जपेत् ॥ १३८

महामृत्युञ्जयं जप्यं शान्तिहोमं यथाविधि ।
आयुस्सुखं यशः कीर्तिं देहारोग्यं महत्सुखम् ॥ १३९

கேதுதசையில் குருவினுடைய அந்தராந்தரபுக்தி
தினம் 19, நாழி 36

फलम् —

आयुरारोग्यमैश्वर्यं वाहनं भूषणं तथा ।
विवादात्फलसिद्धिश्च केतोरभ्यन्तरे गुरौ ॥ १४०

கேதுதசையில் குருவினுடைய ஸூக்ஷ்மபுக்தி
தினம் 1, நாழி 7, விநாடி 16

फलम् —

वैरं विरोधसंपत्तिः साहसाद्राज्यसंभवः ।
पशुक्षेत्रधनावाप्तिः केतोः सूक्ष्मगते गुरौ ॥ १४१

கேதுதசையில் குருவினுடைய பிராணபுக்தி
நாழி 3, விநாடி 55

फलम् —

सुवस्त्राभरणं जातिः प्रभुसेवा विचक्षणः ।
लोकेनानुगतो नित्यं केतोः प्राणगते गुरौ ॥ १४२

கேதுதசையில் சனிபுக்தி வரு 1, மீ 1, தினம் 9

फलम्—

कालमृत्युभयं रोगाज्ज्वरं वापि समादिशेत् ।
द्रव्यनाशं कुमार्गं च पुत्ररोगः सुदुस्सहः ॥ १४३
दारनाशो रिपोर्भीतिर्भूमिनाशो धनक्षयः ।
राज्यक्षोभो महाहानिः केतोरन्तर्गते शनौ ॥ १४४

किञ्च—

चित्ते पित्तकृता पीडा गोत्रजैः सह विग्रहः ।
विदेशगमनं रोगः केतोरन्तर्गते शनौ ॥ १४५

ग्रन्थान्तरे—

पापाभिहतिः परोपतापः
परिजनविग्रह अङ्गभङ्गता च ।
धनपथवहतिस्थधातुराश्यां(?)
[धनचयविहतिस्तथा निराशा]
गतवति सूर्यसुते शिखीधरायुः ॥ १४६

अन्यच्च—

केतोरन्तर्गते मन्दे स्वदेहायासपीडनम् ।
स्थानच्युतिः प्रवासश्च युद्धे त्वपजयो भवेत् ॥ १४७
मार्गे किञ्चित्प्राणभयं षष्ठाष्टव्ययराशिगे ।
मूलत्रिकोणगे मन्दे स्वदेहायासपीडनम् ॥ १४८
राजकार्यकलापेन धनधान्यं महद्भयम् ।
बन्धुक्लेशो मनस्तापश्चतुष्पाज्जीवपीडनम् ॥ १४९
स्थानच्युतिः प्रवासश्च युद्धेष्वपजयो भवेत् ।
तुलायां स्वर्क्षगे वापि त्रिकोणे केन्द्रलाभयोः ॥ १५०
दुश्चिक्ये स्वांशके वापि मित्रभे च शुभांशके ।
शुभदृष्टि च संप्राप्ते राजानुग्रहवैभवम् ॥ १५१
कार्यलाभो महासौख्यं स्ववारे राजदर्शनम् ।
स्वप्रभोश्च महासौख्यं वस्त्रवाहनभूषणम् ॥ १५२
दायेशात्षष्ठरन्ध्रे वा व्यये वा बलवर्जिते ।
देहजाड्यं मनस्तापः कार्यविघ्नं महद्भयम् ॥ १५३

आलस्यं मानहानिश्च पितृमातृविनाशनम् ।
द्वितीयद्युननाथे वा अपमृत्युभयं भवेत् ॥ १५४

तद्दोषपरिहारार्थं तिलदानं च कारयेत् ।
कृष्णां गां महिषीं दद्याद्दानेनारोग्यमादिशेत् ॥ १५५

கேதுதசையில் சனியினுடைய அந்தராந்தரபுக்தி
மீ 2, தினம் 3, நாழி 10

फलम् —

बन्धनं रणभीतिश्च गृहादौ पशुपक्षयः ।
विदेशमरणावाप्तिः केतोरभ्यन्तरे शनौ ॥ १५६

கேதுதசையில் சனியினுடைய ஸூக்ஷ்மபுக்தி
தினம் 10, நாழி 30

फलम् —

बन्धनं व्रणभीतिश्च अग्निना पशुनाशनम् ।
विदेशे दुःखमाप्नोति केतोः सूक्ष्मगते शनौ ॥ १५७

கேதுதசையில் சனியினுடைய ப்ராணபுக்தி
தினம் 1, நாழி 15

फलम् —

युद्धे मनस्सुतीक्ष्णं च क्रूरकर्मरतिस्तथा ।
वञ्चनादुन्धनप्राप्तिः केतोः प्राणगते शनौ ॥ १५८

கேதுதசையில் புதபுக்தி மீ 11, தினம் 27

फलम् —

गीर्वाणवादसंल्लापः शिष्टवाक्येन लालितम् ।
अन्नदानं महोत्साहः सर्वस्थानेषु पूजनम् ॥ १५९

प्रबोधो धर्मबोधश्च आरोग्यं कीर्तिरुत्तमा ।
वाहनं प्रियदर्शं च केतोरन्तर्गते बुधे ॥ १६०

अरिवरजननं नरेन्द्रपूजा
धरणिधराप्तिरपि ज्वरपीडा ।
पशुकृषिविहतिर्भवेत्तु पुंसां
विशति बुधे फणिराजतुङ्गदायम् ॥ १६१

अन्यच्च—

सुहृद्बन्धमवाप्नोति बान्धवैः कलहं सदा ।
देहपीडाज्वरं शीतं केतोश्चान्तर्गते बुधे ॥ १६२

ग्रन्थान्तरे—

केतोरन्तर्गते सौम्ये केन्द्रलाभत्रिकोणगे ।
स्वोच्चस्वक्षेत्रसंयुक्ते राज्यलाभं महत्सुखम् ॥ १६३
सत्कथाश्रवणं दानं धर्मसिद्धिर्महत्सुखम् ।
भूलाभः पुत्रलाभश्च विद्यागोष्ठीधनागमः ॥ १६४
अयत्नधर्मलाभश्च विवाहश्च भविष्यति ।
गृहे शुभकरं चैव वस्त्रालङ्कारभूषणम् ॥ १६५
भाग्यकर्माधिपैर्युक्ते भाग्यवृद्धिः सुखाधिकम् ।
विद्यागोष्ठीप्रसङ्गेन सन्तोषं भूषणाधिकम् ॥ १६६
षष्ठाष्टमव्यये सौम्ये मन्दाराहियुतेक्षिते ।
विरोधं राजकार्याणि परगेहनिवासनम् ॥ १६७
वाहनाम्बरपश्वादिधनधान्यपशुक्षयः ।
दक्षिणां दिशमाश्रित्य प्रयाणं राजदर्शनम् ॥ १६८
अन्ते क्लेशकरं चैव दारपुत्रादिपीडनम् ।
दायेशात्केन्द्रगे सौम्ये त्रिकोणे लाभगेऽपि वा ॥ १६९
शुभयुक्ते नृपात्प्रीतिं वस्त्रवाहनभूषणम् ।
देहारोग्यं महत्सौख्यं पुत्रकल्याणवैभवम् ॥ १७०
भोजनाम्बरपश्वादि गृहे लक्ष्मीकटाक्षकृत् ।
दायेशात्षष्ठरन्ध्रे वा व्यये च बलवर्जिते ॥ १७१
तद्भुक्त्यादौ महत्कष्टं दारपुत्रादिपीडनम् ।
राजप्रीतिकरं चैव मध्येऽन्तेऽर्थविनाशनम् ॥ १७२
द्वितीयद्यूननाथे वा अपमृत्युर्भविष्यति ।
तद्दोषपरिहारार्थं ब्राह्मणान् भोजयेत्ततः ।
विष्णुसाहस्रकं जप्यं सर्वसंपत्प्रदायकम् ॥ १७३

*கேதுதசையில் புதனுடைய அந்தராந்தரபுக்தி ரூ 1,*
*தினம் 20, நாழி 3.*

फलम् —

आरोग्यं पुत्रलाभश्च गोमहिष्यादिसंभवः ।
अन्यदेशाद्धनावाप्तिः केतोरभ्यन्तरे बुधे ॥ १७४

கேதுதசையில் புதனுடைய ஸூக்ஷ்மபுக்தி
தினம் 6, நாழி 26

फलम् —

नानाविजयमाप्नोति वाहनं पुत्रसंभवम् ।
रससंपत्समृद्धिं च केतोः सूक्ष्मगते बुधे ॥ १७५

கேதுதசையில் புதனுடைய ப்ராணபுக்தி தினம் 1,
நாழி 42

फलम् —

कुसुमं शयनं भूषा लेपनं भूषणादिकम् ।
संसारसुखभोगी स्यात्केतोः प्राणगते बुधे ॥ १७६

## अथ शुक्रमहादशाफलानि उच्यन्ते

சுக்ரதசை வருஷம் 20

फलम् —

सामान्यं सर्वराशिषु शुक्रस्य च दशाफलं समाचष्टे ।
स्त्रीभूषणाम्बरसुखप्रमोदसत्कारं मानधनलाभः ॥ १
कन्दर्पशास्त्रनिपुणो नानान्वितोऽतिमेधावी ।
नृत्तादिगीतकुशलो दाक्षिण्यरतोऽन्नदानादिशीलश्च ॥ २
क्रयविक्रयेषु कुशलो गोमान् कृतदारवान् सुतार्थयुतः ।
पूर्वार्जितधनभोक्ता कुलगणरक्षोऽथ वातकफान्वितो रोगी ॥ ३
भ्रातृसमस्तेजहतो महादुःखी जनवैरिणं लभते ।
कष्टायां मर्मवैरीभिः प्रीतिं राशिनः प्रत्येकम् ॥
शुक्रदशाफलं वक्ष्ये रिपुनीचांशकरहितो ग्रहीनो निश्चयं फलं ब्रूयात्॥(?)४

ग्रन्थान्तरे—

अत्युच्चभृगुदशायां मत्तविलासं प्रियार्थभोगी स्यात् ।
माल्याच्छादनभोजनशयनस्त्रीपुत्ररत्नयुतः ॥ ५
स्वोच्चस्थितस्यापि भृगोर्दशायां
स्त्रीसङ्गनष्टार्थविरुद्धधर्मम् ।
पुत्रो विनाशं समुपैति दुःखं
शिरोरुजं भूपतिमानन्नं च ॥ ६

आरोहिणी शुक्रदशा प्रपन्ना
धान्याम्बरालङ्कृतकान्तिपूजाम् ।
प्रवृत्तिसिद्धिं स्वजनैर्विरोधं
मात्रादिनाशं परदारसङ्गम् ॥ ७

भृगोः सुतस्याप्यवरोहकाले
प्रचण्डवेश्यागमनं धनार्तिम् ।
स्त्रीपुत्रबन्ध्वार्तिमनोविकारं
हृच्छूलरोगं मदनार्तिमेति ॥ ८

उद्वेगरोगसन्तप्तः कर्मसु विफलेषु सर्वाभिरतः ।
अतिनीचगतस्य दाये शुक्रस्यार्थकलत्रहानिः ॥ ९

मूलत्रिकोणभाजो भृगोर्दशायां महाधिपत्यं स्यात् ।
क्रयविक्रयकुशलो धनवान् कीर्त्यान्वितो विधिज्ञश्च ॥ १०

शुक्रक्षेत्रदशायां लभते स्त्रीमूलधनशौर्यम् ।
नित्योत्साहद्वेषं परोपकारं महत्त्वं च ॥ ११

भृगोर्दशायामतिशत्रुराशि-
गतस्य पुत्रार्थकलत्रहानिम् ।
प्रभग्नसंसारविशीर्णदेहं
गुल्माक्षिरोगं गृहिणीप्रकोपम् ॥ १२

शत्रुक्षेत्रदशायां भृगोरपत्यार्थदारहानिः स्यात् ।
भूपतिरोषं कुरुते मत्तविलासार्थमाप्तकर्माणि ॥ १३

मित्रक्षेत्रदशायां परोपकारी कलाविधिज्ञश्च ।
मारामा कृषिः स्याद्देवमनुष्यैश्च वरो धृतार्थश्च ॥ १४

अतिमित्रशुक्रदाये भूपतिसंमानसौख्यं च ।
गोधनवाजिसमेतं गजभटसङ्घैः समस्तघोषैः च ॥ १५

समर्क्षगस्यापि भृगोर्विपाके
प्रमेहगुल्मार्तिगुदप्ररोगम् ।
किञ्चित्सुखं भूपतिवह्निचोरै-
र्भयं स्वबन्धुस्वजनैर्विरोधम् ॥ १६

नीचखेचरसंयुक्तो भृगोर्दाये महद्भयम् ।
अपवादकृतं दोषं लभते पातकं महत् ॥ १७

स्वोच्चस्थितेन सहितस्य भृगोर्विपाके
　राज्यं महत्त्वममराधिपतित्वमेति ।
हेमाम्बराणि मणिभूषणयानलाभं
　भेरीमृदङ्गपणवारवत्राद्यघोषैः ॥　　१८

पापान्वितस्यापि भृगोर्दशायां
　स्थानच्युतिं बन्धुजनैर्विरोधम् ।
आचारहीनं कलहप्रियत्वं
　कृष्यर्थभूम्यात्मजदारनाशम् ॥　　१९

शुभान्वितस्यापि भृगोर्दशायां
　सौभाग्यमित्रात्मजधान्यलाभम् ।
नरेशपूज्यं गजवाजिसङ्घैः
　प्रवालमुक्तामणियानलाभम् ॥　　२०

पापेक्षितस्यापि भृगोर्दशायां
　मानार्थहानिं समुपैति दुःखम् ।
स्त्रिया विरोधं स्वपदच्युतिं च
　विदेशवासं निजकर्महानिम् ॥　　२१

शुभेक्षितस्यापि भृगोर्विपाके
　धनायतिं भूपतिपूजनं च ।
जनाधिपत्यं स्वशरीरकान्ति
　कलत्रमित्रात्मजसौख्यमेति ॥　　२२

केन्द्रं गतस्य च दशा भृगुनन्दनस्य
　यानाम्बरादिमणिभूषणदेहकान्तिम् ।
राज्यार्थभूमिकृषिवाहनपट्टवस्त्रं
　दुर्गादियानवनवासजलाभिषेकम् ॥　　२३

लग्नगशुक्रदशायां संप्राप्तौ राजमाननं लभते ।
मणिधनगोकृषिलाभं परापवादं महोत्साहम् ॥　　२४

चतुर्थराशिस्थितशुक्रदाये
　राज्यं महत्सौख्यमुपैति यानम् ।
कृषिक्रियावित्तपशुप्रजानां
　वृद्धिं प्रतापान्वितकीर्तिजालम् ॥　　२५

कलत्रराशिस्थितशुक्रदाये
कलत्रनाशं त्वथवा विदेशम् ।
प्रमेहगुल्मादि च रोगजालं
प्रभग्नवित्तात्मजबन्धुराज्यम् ॥ २६

कर्मस्थशुक्रस्य दशाविपाके
यज्ञादिकर्मार्थनरेशपूजाम् ।
भाग्योत्तरं प्रापितदेहकान्ति
दिगन्तराक्रान्तयशः प्रतापम् ॥ २७

त्रिकोणसंयुक्तभृगोर्विपाके
विद्याधनप्राप्तिनरेशपूजाम् ।
प्रवाळमुक्तामणिशङ्खशुक्ति-
गोभूमियानाम्बरवस्त्रलाभम् ॥ २८

पञ्चमस्थभृगोर्दाये पुत्रप्राप्तिं विनिर्दिशेत् ।
कीर्तिं च राजपूजां च सर्वेषामुपकारताम् ॥ २९

त्रित्रिकोणगतः शुक्रः करोति नृपपूजनम् ।
यज्ञकर्मादिलाभं च गुरुपित्रोः सुखं यशः ॥ ३०

वित्तगशुक्रदशायां धनपतिमाहुर्धनायतिं च [चापि] ।
अन्नसुखवाग्विलासं परोपकारं नरेशसंमानम् ॥ ३१

तृतीयराशिस्थितशुक्रदाये
धैर्यं महोत्साहमतीव सत्त्वम् ।
चित्राम्बरालंकृतवाहनाप्तिं
सहोदराणां बहुभाग्यलाभम् ॥ ३२

भृगोर्विपाकेऽरिगतस्य नाशं
धान्यार्थबन्ध्वात्मजसोदराणाम् ।
रोगं महत्कार्यविनाशनं च
शत्रोर्भयं भूपतिवह्निचोरैः ॥ ३३

रन्ध्रस्थितस्यापि भृगोर्विपाके
शस्त्राग्निचोरक्षतमन्नविघ्नम् ।
क्वचित्सुखं किञ्चिदुपैति वित्तं
क्वचिन्नरेन्द्राप्तयशःप्रतापम् ॥ ३४

लाभस्थितस्यापि भृगोर्विपाके
सुगन्धमाल्याम्बरराजपूजाम् ।
पुत्रार्थसौख्यं कृषिविक्रयं च
दानं स्वनामाङ्कितपद्यजालम् ॥ ३५

व्ययगतशुक्रदशायां लभते धान्यार्थराजसंमानम् ।
स्थानच्युतिं प्रवासं मातृवियोगं मनोविकारं च ॥ ३६

दशाधिनाथस्य तदन्तरेशः
शुभस्थितश्चेद्यदि देहसौख्यम् ।
भूपालसंमानमतीव राज्य-
भरत्वमिष्टाप्तिमनेकवित्तम् ॥ ३७

जीवक्षेत्रगतस्य भृगोः स्त्रीपुत्रं हि [स्त्रीपुत्राणां] विनाशनं कुरुते ।
कर्मसु नित्योद्विग्नो जननीक्लेशान्वितो मनोदुःखी ॥ ३८

सिंहगतशुक्रदशायां लभते विविधापदं मनोदुःखम् ।
उद्वेगरोगसन्तापं कर्मसु विफलेषु सर्वदाभिरतिम् ॥ ३९

अर्कगशुक्रदशायां जीर्णगृहं वासकाद्विरोधं च ।
लभते दारविनाशं भ्रातृवियोगं च कलहं च ॥ ४०

शुक्रे स्थानबलाधिके नरपतेः संमाननं भूषणं
विद्यावादविनोदगोष्ठिरसिकं नामद्वयं संभ्रमम् ।
तस्मिन् दिग्बलान्विते बहुजयं पुत्रार्थदाराम्बरं
शुक्रे कालबलान्विते सुखधनं कीर्तिं स्वनामाङ्कितम् ॥ ४१

निसर्गवीर्ययुक्तस्य भृगोर्दाये महत्सुखम् ।
कृषिगोभूमिवित्तादि भ्रातृमातृसुखं भवेत् ॥ ४२

वक्रं गतस्यापि भृगोः सुतस्य
दशाविपाके त्वरिराजपूजाम् ।
मृदङ्गभेरीरवयुक्तयानं
विचित्रवस्त्राभरणानि राज्यम् ॥ ४३

दिग्वीर्ययुक्तस्य भृगोर्विपाके
यज्ञादिकर्माणि करोति काले ।
विद्याविलासं शयनाम्बरं च
नृपाभिषेकं शुभसंयुतं च ॥ ४४

क्रूरषष्ठांशसंयुक्तभृगोर्दाये महत्सुखम् ।
कूपारामतटाकानां निर्माणं देवपूजनम् ॥ ४५

वैशेषिकांशसंयुक्तभृगोर्दाये महत्सुखम् ।
वाहनं भूपसंमानं भ्रातृस्त्रीधनसंपदम् ॥ ४६

क्रूरद्रेक्काणसंयुक्तभृगोर्दायेऽतिभीतिदम् ।
कारागृहं महत्कष्टं निगळं चोरपीडनम् ॥ ४७

उच्चक्षेत्रोऽपि नीचांशयुक्तः शुक्रोऽतिकष्टदः ।
करोति राज्यनाशं च स्थाननाशमथापि वा ॥ ४८

उच्चांशयुक्तशुक्रोऽपि नीचराशिसमन्वितः ।
कृषिगोभूमिवाणिज्यं धनधान्यादिवर्धनम् ॥ ४९

होराप्रदीपिकायाम् —

मेषस्थशुक्रदाये तु धनवान् भाग्यवान् भवेत् ।
ग्रामदेशाधिपत्यं च बहुस्त्रीवल्लभो भवेत् ५०

वृषस्थशुक्रदाये तु बहुवित्तं लभेत ना ।
राजमानं तथा सौख्यं विद्यावादे जयो भवेत् ॥ ५१

युग्मस्थशुक्रदाये तु भ्रातृसौख्यं विनिर्दिशेत् ।
वित्तलाभं धनं चैव लभते नात्र संशयः ॥ ५२

कर्किस्थशुक्रदाये तु गृहलाभं तथा सुखम् ।
विद्यालाभं जयं चापि मातृसौख्यं स्त्रियं लभेत् ॥ ५३

सिंहस्थशुक्रदाये तु पुत्रलाभं सुखं लभेत् ।
कन्यासस्थभृगोर्दाये क्षेत्रनाशमुपैति च ॥ ५४

तथापि सौख्यमाप्नोति मातृनाशोऽथवा विपत् ।
तौलिस्थशुक्रदाये तु राज्यभोगं सुखं लभेत् ॥ ५५

बहुदारभृत्यसाख्यं कीर्तिं वित्त विशेषयेत् ।
कीटस्थशुक्रदाये तु राज्यनाशमुपैति च ॥ ५६

धननाशं स्थाननाशं कळत्रस्य तु नाशनम् ।
चापस्थशुक्रदाये तु वित्तं सौख्यं तथा सुखम् ॥ ५७

ग्रामदेशाधिपत्यं च स्त्रीलाभो भवति ध्रुवम् ।
मकरस्थभृगोर्दाये धनवाहनभूषणम् ॥ ५८

देशग्रामाधिपत्यं च कर्मसिद्धिमवाप्नुयात् ।
कुम्भस्थशुक्रदाये तु किञ्चिद्धान्यं धनं लभेत् ॥ ५९

वाहनं भोगभोग्यं च बहुसौख्यं वदेद्बुधः ।
मीनस्थशुक्रदाये तु किञ्चिद्धान्यं धनं लभेत् ॥ ६०
देशग्रामाधिपत्यं च बहुसौख्यं वदेद्बुधः ।
वाहनं भोगभोग्यं च मध्ये मध्ये लयं भवेत् ॥ ६१
क्षेत्रनाशं पदभ्रंशं धननाशं लभेन्नरः ।
सूर्येण संयुते दृष्टे भाग्यवान् स्त्रीविनाशनम् ॥ ६२
चन्द्रेण संयुते दृष्टे धनवाहनभाग्भवेत् ।
कुजेन संयुते दृष्टे सर्वस्व लभते क्षयम् ॥ ६३
तथापि वित्तं लभते मध्ये मध्ये लयं तथा ।
कळत्रहानिमाप्नोति बलहीने भृगौ सति ॥ ६४
बुधेन सहिते दृष्टे ग्रामदेशाधिपो भवेत् ।
शत्रुबाधाव्रणं चापि कळत्रस्य तु रोगतः ॥ ६५
गुरुणा संयुते दृष्टे ग्रामदेशपतिर्भवेत् ।
क्षेत्रनाशस्तथा दुःखं धनधान्यविनाशनम् ॥ ६६
शनिना संयुते दृष्टे शूद्रस्त्रीसंगमो भवेत् ।
ग्रामदेशाधिपत्यं च कळत्रस्य च नाशनम् ॥ ६७
राहुकेतुसमेतश्चेत् विधवासंगमो भवेत् ।
चोरेण धननाशश्च स्त्रीनाशोऽप्यथवा विपत् ॥ ६८
ग्रहस्य स्वेन युक्तस्य त्वशुभस्य शुभस्य वा ।
प्राबल्यवशतो ब्रूयाच्छुभाशुभफलं बुधः ॥ ६९

ग्रन्थान्तरे—

आनन्दवृद्धिरतिसर्वशरीरसौख्यं
क्षेत्राभिवृद्धिनरवाहनमर्थलाभः ।
आयुश्शरीरबहुपुत्रसुखं नराणां
अन्यच्च भार्गवदशागमने भवन्ति ॥ ७०

*சுக்ரதசையில் சுக்ராபஹாரம் வருஷம் 3, மீ ।*

फलम्—

भृगोर्दशायां भृगुभुक्तिकाले
स्त्रीगन्धपुष्पान्नसुगन्धवस्त्रम् ।
लाभं च नागाश्वसुवाहनादेः
बन्धुप्रजन्मागममर्थसिद्धिम् ॥ ७१

लक्ष्मीकटाक्षचिह्नानि ग्रामभूम्यादिलाभकृत् ।
नूतनगृहनिर्माणं नित्यं मृष्टान्नभोजनम् ॥ ७२
आत्मबन्धुप्रभुजने विवाहादिश्च सत्क्रिया ।
भोगस्त्रीसौख्यसन्तानमिथुने गर्भिणीरतिः ॥ ७३

ग्रन्थान्तरे—

मूलत्रिकोणस्वर्क्षे वा केन्द्रलाभत्रिकोणगे ।
उच्चे वा बलसंयुक्ते महत्सौख्यं महद्धनम् ॥ ७४
आरोग्यं भूषणं वस्त्रमानन्दः परमं सुखम् ।
महाराजप्रसादेन देशग्रामाधिपत्यताम् ॥ ७५
गजान्तैश्वर्यसंपन्नं गृहे लक्ष्मीकटाक्षकृत् ।
सेनाधिपत्यं कुरुते तद्राज्ये चाभिषेचनम् ॥ ७६
नष्टराज्यधनप्राप्तिर्गृहे गोधनसंकुलम् ।
षष्ठाष्टमव्यये शुक्रे वरराशौ शुभेक्षिते ॥ ७७
विदेशराजसंमानं संचारो भवति ध्रुवम् ।
क्वचिद्धानं कचित्सौख्यं मनसोऽभीष्टसिद्धिदम् ॥ ७८
देवालयतटाकादिपुण्यकर्मादिसंग्रहम् ।
ब्राह्मणप्रभुनिष्ठूरं किञ्चिद्‌द्रव्याकुलमेव च ॥ ७९
भुक्त्यादौ किञ्चिदालस्यं मध्ये सौख्यफलं भवेत् ।
अन्ते च श्रियमाप्नोति दारपुत्रविवर्धनम् ॥ ८०
पापयुक्तेऽर्थहानिः स्यान्नेत्रपीडा धनं सुखम् ।
षष्ठाष्टमव्यये शुक्रे पापग्रहयुतेक्षिते ॥ ८१
नीचारिमूढभे वापि देहपीडा भविष्यति ।
राजभीतिरर्थहानिर्बन्धुनाशो न संशयः ॥ ८२
तापज्वरो विरोधश्च स्वस्त्रीपीडा भविष्यति ।
कार्यहानिर्मनोदुःखं शुक्रस्यान्तर्गते भृगौ ॥ ८३

சுக்ரதசையில் சுக்ரனுடைய அந்தராந்தரபுக்தி
மீ 6, தினம் 20

फलम्—

कल्याणं हारकेयूरभूषणं चैव वाहनम् ।
दानं च पुत्रसौभाग्यमर्थलाभं पदादिकम् ॥
उत्तरे च फलं प्रोक्तमन्तरान्तर्गते भृगौ ॥ ८४

சுக்ரதசையில் சுக்ரனுடைய ஸூக்ஷ்மபுக்தி மீ 1,
தினம் 3, நாழி 20

फलम् —

दाने धर्मार्थयोः शोकः शङ्करालयसंभवः ।
तटाककूपनिर्माणं शुक्रसूक्ष्मदशाफलम् ॥ ८५

சுக்ரதசையில் சுக்ரனுடைய ப்ராணபுக்தி
தினம் 5, நாழி 33

तत्फलम् —

ज्ञानमीश्वरभक्तिश्च तोयधर्मरसायनम् ।
पुत्रपौत्रसमृद्धिश्च शुक्रप्राणदशाफलम् ॥ ८६

சுக்ரதசையில் ரவிபுக்தி வரு 1

फलम्—

शुक्रस्यान्तर्गते सूर्ये दायेशात्केन्द्रकोणगे ।
शुभयुक्ते शुभैर्दृष्टे शुभशोभनमादिशेत् ॥ ८७
धनहानिः पापयुक्ते वैषम्यं स्वजनादिषु ।
कुभोजनं कुत्सितान्नं पापकर्मादिसंग्रहः ॥ ८८
भुक्त्यादौ फलमेवं स्यान्मध्ये सौख्यं महत्सुखम् ।
अन्ते तु शुभदं प्रोक्तं शुभयुक्ते कचित्सुखम् ॥ ८९
दायेशात्षष्ठरन्ध्रे वा व्यये वा पापसंयुते ।
व्रणचोराग्निबाधा च मार्गे चोरभयं भवेत् ॥ ९०
देहतापज्वराद्भीतिर्गृहक्षेत्रादिनाशनम् ।
सप्तमाधिपदोषेण त्वपमृत्युर्भविष्यति ॥ ९१
तद्दोषपरिहारार्थं सूर्यप्रीतिकरं जपेत् ।
देहायुर्वृद्धिसंपत्तिसर्वसौख्यशुभप्रदम् ॥ ९२

சுக்ரதசையில் ஸூர்யனுடைய அந்தராந்தரபுக்தி தினம் 18

परराष्ट्रसमृद्धिश्च स्वदेशगमनं तथा ।
अन्यत्र वाहनं लाभः शुक्रस्यान्तर्गते रवौ ॥ ९३

சுக்ரதசையில் ரவியினுடைய ஸூக்ஷ்மபுக்தி
தினம் 1, நாழி 3

फलम्—

उरस्तापो ब्राह्मणत्वं गतागतिविचेष्टितम् ।
कचित्कार्यार्थसिद्धिः स्याच्छुक्रसूक्ष्मगते रवौ ॥ ९४

சுக்ரதசையில் ரவியினுடைய ப்ராணபுக்தி
நாழி 4, விநாடி 5

फलम् —

लोकप्रतापकीर्तिश्च सुतसौख्यविवर्जितः ।
उष्णादिरोगसंपत्तिः शुक्रप्राणगते रवौ ॥ ९५

சுக்ரதசையில் சந்திரனுடைய அபஹாரம் வரு 1, மா 8

फलम् —

अनेकराज्यसंपत्तिः सेनाधिक्यं महत्सुखम् ।
महाराजप्रसादेन गजान्तैश्वर्यमाप्नुयात् ॥ ९६
गीतवादित्रसङ्गादि विद्वज्जनविभूषितम् ।
नटनाट्यादिसंयुक्तं नूतनगृहलाभकृत् ॥ ९७
भेरीमृदङ्गवाद्यादि बहुसेनाधिनायकम् ।
महानदीस्नानपुण्यं देवब्राह्मणपूजनम् ॥ ९८
स्वोच्चस्वक्षेत्रगे वापि लग्नाद्वित्तगतेऽपि वा ।
एवमेव फलं सौम्यदृष्टे पापयुतेऽपि तु ॥ ९९
तत्काले धनहानिः स्यात् स्थानच्युतिरकारणात् ।
द्विसप्तमाधिपे चन्द्रे त्वपमृत्युभयं भवेत् ॥ १००
तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ।
सर्वसौख्यकरं श्रेष्ठं सर्वसंपत्प्रदायकम् ॥ १०१
दायेशात्केन्द्रकोणे वा लाभस्थानगतेऽपि वा ।
नृपपूजां मनोधैर्यं देशग्रामाधिपत्यताम् ॥ १०२
वाहनात्पोषणं चैव देवालयतटाककृत् ।
दायेशात्षष्ठरन्ध्रे वा व्यये वा बलवर्जिते ॥ १०३
राजकोपो मनस्तापः कार्यविघ्नो महद्भयम् ।
शुभभुक्तिप्रवेशे तु अन्ते क्लेशकरं भवेत् ॥ १०४

சுக்ரதசையில் சந்திரனுடைய அந்தராந்தரபுக்தி
மா 1, தினம் 20

फलम् —

देशत्यागो जनाद्भीतिर्लोकानुग्रहकारिता ।
हेमविद्रुमसंभूतिः शुक्रस्याभ्यन्तरे विधौ ॥ १०५

சுக்ரதசையில் சந்திரனுடைய ஸூக்ஷ்மபுக்தி
தினம் 3, நாழி 30

फलम् —

आरोग्यं धनसंपत्तिः कार्यलाभो गतागतैः ।
वैदिकाचारसंपत्तिः शुक्रसूक्ष्मगते विधौ ॥ १०६

சுக்ரதசையில் சந்த்ரனுடைய ப்ராணபுக்தி நாழி 30

फलम् —

देवार्चनरतः कर्मी मन्त्रानुष्ठानतत्परः ।
धनी सौभाग्यको मन्त्री शुक्रप्राणगते विधौ ॥ १०७

சுக்ரதசையில் குஜபுக்தி ௵ 1, ௴ 2

फलम् —

शुक्रस्यान्तर्गते भौमे लग्नात्केन्द्रत्रिकोणगे ।
लग्नाधिपेन संयुक्ते राजानुग्रहशान्तिकम् ॥ १०८
लक्ष्मीकटाक्षचिह्नानि नष्टराज्यफलप्रदः ।
उच्चस्वक्षेत्रभे वापि गृहे गोक्षीरसंकुलम् ॥ १०९
अनेकधनलाभं च रक्तवस्त्राश्वलाभकृत् ।
षष्ठाष्टमव्यये भौमे पापयुक्तेऽथ वीक्षिते ॥ ११०
राजयोगं विनिर्गत्य समलीत्वपराभवम् ।
राजपत्नीविरोधश्च स्वग्रामे धान्यनाशनम् ॥ १११
छागाश्वकृषिगोहानिः कलहः समुपैष्यति ।
क्रूरमासं परित्यज्य सर्वदा सौख्यमाप्नुयात् ॥ ११२
स्वक्षेत्रोच्चगते वापि पितृकर्मरतोऽपि वा ।
षष्ठे वा बलसंयुक्ते महत्सौख्यं धनं भवेत् ॥ ११३
राज्याश्ववस्त्रप्राप्तिश्च सुतदारादिवर्धनम् ।
दायेशात्केन्द्रकोणे वा दुश्चिक्ये लाभगेऽपि वा ॥ ११४
शुभदृष्टे शुभैर्युक्ते धनधान्यार्थसंपदः ।
महोत्सवादिसन्तोषो नूतनप्रभुदर्शनम् ॥ ११५
चतुष्पाज्जीवलाभः स्यात् पुण्यतीर्थाभिषेचनम् ।
देहकान्तिश्च सौन्दर्यं स्ववारे राजदर्शनम् ॥ ११६

वस्त्राभरणलाभः स्यादिष्टसिद्धिःसुखं भवेत् ।
दायेशाद्रिपुरन्ध्रस्थे व्यये वा पापसंयुते ॥ ११७
कलहो बन्धुवैषम्यं गोगजाश्वविनाशकृत् ।
व्रणपीडा भवेन्मृत्युः स्वप्रभोश्च महाविपत् ॥ ११८
चतुष्पाज्जीवहानिः स्याद्बन्धुक्लेशो भविष्यति ।
स्थानच्युतिप्रवासौ च देहपीडा मनोव्यथा ॥ ११९
द्वितीयद्यूननाथे वा देहतापज्वरो भवेत् ।
सुब्रह्मण्यजपं कुर्याद्दानं चैव तु कारयेत् ॥ १२०
कुजप्रीतिकरीं चैव शान्तिं कुर्याद्विचक्षणः ।

சுக்ரதசையில் குஜனுடைய அந்தராந்தரபுக்தி
தினம் 24, நாழி 30

फलम् —

मुनिपुत्रध्रुवं पुत्रं स्वामिगोत्रपरिप्रियम् ।
सौमनस्यं विरक्तः स्याच्छुक्रस्याभ्यन्तरे कुजे ॥ १२१

சுக்ரதசையில் குஜனுடைய ஸூக்ஷ்மபுக்தி
தினம் 1, நாழி 21

फलम् —

जडत्वं नृपवैषम्यं देशभ्रंशो धनक्षयः ।
महाव्याधिसमुत्पत्तिः शुक्रसूक्ष्मगते कुजे ॥ १२२

சுக்ரதசையில் குஜனுடைய ப்ராணபுக்தி
நாழி 4, விநாடி 49

फलम् —

ज्वरावस्थानकारस्फोटं कस्स्मृतिर्देहकारणम् (?) ।
[ज्वरावस्था नखास्फोटोऽपस्मृतिर्देहके व्रणम्]
नित्यं ब्राह्मणपूजा च शुक्रप्राणगते कुजे ॥ १२३

சுக்ரதசையில் ராஹுபுக்தி வரு 3

फलम् —

शुक्रस्यान्तर्गते राहौ कलहो राजविड्वरम् ।
दायादिकलहश्चैव व्यवहारस्तथैव च ॥ १२४

राजवैषम्यकार्याणि स्त्रीद्वेषो दारपीडनम् ।
लग्नादुपचये राहौ शुभग्रहसमन्विते ॥ १२५

शत्रुनाशो महोत्सहः राजप्रीतिकरं शुभम् ।
भुक्त्यादौ शरमासान्तं वातगुल्मादिरोगकृत् ॥ १२६

तत्परं राजयोगः स्याद्देहबाधा क्वचित्सुखम् ।
दिने दिने वृद्धिमेति सितपक्षशशी यथा ॥ १२७

वाहनादिधनं भूमिगृहे गोधनसंकुलम् ।
नैर्ऋतीं दिशमाश्रित्य प्रयाणे राजदर्शनम् ॥ १२८

तत्तत्कार्यार्थसिद्धिः स्यात् स्वदेशं पुनरेष्यति ।
उपकुर्वन् ब्राह्मणानां तीर्थयात्रादिकर्मणा ॥ १२९

वाहनं ग्रामलाभश्च देवब्राह्मणतर्पणम् ।
पापयुक्तेऽथवा दृष्टे केन्द्रकोणे च तुङ्गके ॥ १३०

अशुभानि च कर्माणि पितृमातृजनावधि ।
सर्वत्र जनविद्वेषं नृपमूलाद्धनागमः ॥ १३१

दायेशात्केन्द्रकोणे वा दुश्चिक्ये लाभगेऽपि वा ।
तत्कालेऽल्पधनावाप्तिर्बन्धुसङ्गमलालनम् ॥ १३२

स्वदारसौख्यमाप्नोति रतौ कलहमादिशेत् ।
भुक्त्यादौ शूलरोगं च संग्रामेऽरिभयं तथा ॥ १३३

कलहः स्थानचलनं मध्येऽन्ते सौख्यमाप्नुयात् ।
दायेशात्षष्ठरन्ध्रे वा व्यये वा बलवर्जिते ॥ १३४

धनधान्यकृषौ नाशं स्वजने कोप एव च ।
द्विसप्तमेशदोषेण शीतज्वरभयं भवेत् ॥ १३५

तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ।
अनड्वाहं प्रकुर्वीत सर्वसंपत्प्रदायकम् ॥ १३६

சுக்ரதசையில் ராஹுவினுடைய அந்தராந்தரபுக்தி
மீ 5, தினம் 12

फलम् —

परशत्रुविनाशश्च तोययाने धनक्षयः ।
दारपुत्रेषु पीडा च शुक्रस्याभ्यन्तरेऽप्यहौ ॥ १३७

சுக்ரதசையில் ராஹுவினுடைய ஸூக்ஷ்மபுக்தி
தினம் 22, நாழி 30

फलम्—

राजाग्निसर्वजातिश्च बन्धुनाशो गुरुव्यथा ।
स्थानच्युतिःगृहाद्भीतिर्भृगोः सूक्ष्मगतेऽप्यहौ ॥ १३८

சுக்ரதசையில் ராஹுவினுடைய ப்ராணபுக்தி
தினம் 4, நாழி 58

फलम्—

विषदृष्टिप्रपीडां च नेत्रकुक्षिगुदामयम् ।
स्वजनैः कलहं दद्याच्छुक्रप्राणगतेऽप्यहौ ॥ १३९

சுக்ரதசையில் குருபுக்தி ௵ 2, ௴ 8

फलम्—

शुक्रस्यान्तर्गते जीवे केन्द्रलाभत्रिकोणगे ।
स्वोच्चस्वक्षेत्रकेन्द्रे वा वक्रे वा बलसंयुते ॥ १४०
नष्टराज्यधनप्राप्तिर्गृहे लक्ष्मीकटाक्षकृत् ।
अनेकधनलाभं च वस्त्राभरणवाहनम् ॥ १४१
मित्रप्रभोश्च संमानं स्वप्रभोश्च फलाधिकम् ।
चतुष्पादादिवृद्धिश्च राज्यलाभः सुखं भवेत् ॥ १४२
षष्ठाष्टमव्यये जीवे नीचे वास्तंगतेऽपि वा ।
पापग्रहेण संयुक्ते कार्यनाशो महद्भयम् ॥ १४३
चोराग्निव्रणभीतिश्च धनधान्यादिनाशनम् ।
स्वमातृस्वकलत्रादिबन्धुपीडा क्वचित् क्वचित् ॥ १४४
गुर्वर्थपरिहारार्थं गोचरे नवमे शनौ ।
अरिष्टं स्वजनैः शोकं स्वप्रभोश्चापमृत्युकृत् ॥ १४५
दायादिव्यवहारश्च गुरुभुक्तौ न संशयः ।
दायेशात्केन्द्रकोणे वा लाभे वा बलसंयुते ॥ १४६
जन्मदेशे सुखं चैव राजयोगो भवेद्ध्रुवम् ।
व्यापाराद्धनलाभश्च पुराणश्रवणादिकम् ॥ १४७

दायेशात्षष्ठरन्ध्रे वा व्यये वा बलसंयुते ।
धनव्ययो मनस्तापः चोराग्निव्रणपीडनम् ॥ १४८

कलहो बन्धुविद्वेषः प्रभुमूलाद्धनव्ययः ।
दुःस्थे लग्नेशसंयुक्ते पश्चात्सौख्यं शुभप्रदम् ॥ १४९

भुक्त्यादौ शोभनं प्रोक्तं मध्येऽन्ते क्लेशमाप्नुयात् ।
विप्रप्रभुमहद्द्वेषः कालातिक्रमभोजनम् ॥ १५०

द्वितीयसप्तमाधीशे त्वपमृत्युभयं भवेत् ।
तद्दोषपरिहारार्थं शिवसाहस्रकं जपेत् ॥
स्वर्णाङ्गां महिषीं दद्यात् सर्वसंपत्प्रदायकम् ॥ १५१

சுக்ரதசையில் குருவினுடைய அந்தராந்தரபுக்தி
மீ 4, தினம் 8

फलम् —

पुत्रलाभो मनस्सौख्यं धनधान्यविवर्धनम् ।
अन्यक्षेत्रप्रशिक्षा च शुक्रस्याभ्यन्तरे गुरौ ॥ १५२

சுக்ரதசையில் குருவினுடைய ஸூக்ஷ்மபுக்தி
தினம் 18, நாழி 8

फलम् —

इतस्ततत्कार्यलाभो क्षेत्रार्थविभवोन्नतिः ।
वाणिज्यवृद्धिलाभश्च भृगोः सूक्ष्मगते गुरौ ॥ १५३

சுக்ரதசையில் குருவினுடைய ப்ராணபுக்தி தினம் 4,
நாழி 26, விநாடி 40

फलम् —

आयुरारोग्यमैश्वर्यं पुत्रस्त्रीजनवैभवम् ।
छत्रादिवाहनादि स्याच्छुक्रप्राणगते गुरौ ॥ १५४

சுக்ரதசையில் சனிபுக்தி வரு 3, மீ 2

फलम् —

शुक्रस्यान्तर्गते मन्दे योगात्प्रबलमादिशेत् ।
समानप्रभुसंमानं पुत्रिकागमनं शुभम् ॥ १५५

लग्नादुपचये मन्दे स्वोच्चस्वक्षेत्रकेन्द्रगे ।
लाभे मूलत्रिकोणे वा कोणे वा बलसंयुते ॥ १५६

राज्यलाभं महत्सौख्यं धनधान्याभिवर्धनम् ।
अश्वान्दोल्यादिलाभं च गजान्तैश्वर्यमाप्नुयात् ॥ १५७
पुण्यतीर्थाभिषेकं च दानधर्मादिसंग्रहम् ।
राजकार्यकलापेन किञ्चिद्व्याकुलमादिशेत् ॥ १५८
स्वप्रभोश्च विशेषेण त्वतीव क्लेशसंभवम् ।
देहालस्यमवाप्नोति ह्यादायादधिकं व्ययम् ॥ १५९

योगं ददाति भृगुजः स्वदशास्वभुक्तौ
सौख्यं सदा नृपतितुल्यमुपैति लक्ष्मीम् ।
श्रेयश्च शत्रुविजयं सुतदारलाभं
मन्दान्तरे भृगुदशागमने भवन्ति ॥ १६०

ग्रन्थान्तरे—

शुक्रस्यान्तर्गते मन्दे देशराजकलापकृत् ।
उत्तरां दिशमाश्रित्य देशे राज्ञां कलापकृत् ॥ १६१
पश्चिमे राजसंमानं गजान्तैश्वर्यमाप्नुयात् ।
जातकस्य शुभं नित्यं गृहे कल्याणमुत्तमम् ॥ १६२
स्वप्रभोश्च सुतप्राप्तिर्धनधान्याम्बरादिकृत् ।
शनिभुक्तौ फलं सत्यं क्रूरमासं विना शुभम् ॥ १६३

भूसुप्रभांशो भृगुजस्य दाये
मन्दान्तरे राजधनाम्बराप्तिः ।
गजाश्वलाभं सुतदारसौख्यम्
अनेकसेनाधिपतेः समत्वम् ॥ १६४

षष्ठाष्टमव्यये मन्दे शुभयुक्तेऽथ वीक्षिते ।
भुक्त्यादौ देहमौढ्यं स्यान्मध्येऽन्ते सौख्यमादिशेत् ॥ १६५
धनव्ययं मनस्तापं चोराग्निव्रणबाधकृत् ।
पापदृष्टे केन्द्रकोणे दुश्चिक्ये लाभगेऽपि वा ॥ १६६
धनधान्याभिवृद्धिश्च स्वप्रभोश्च तदा विपत् ।
अनायासेन लभ्यन्ते हर्म्यादीनि सुगेहवान् ॥ १६७
दायेशाद्रन्ध्रषष्ठे वा व्यये वा दुर्बलो यदि ।
क्रूरपापं वित्तनाशं चोराग्निव्रणपीडनम् ॥ १६८

पश्चादिक्षिनाशश्च भुक्त्यन्ते च कचित्सुखम् ।
द्वितीयद्यूननाथे वा चापमृत्युर्भविष्यति ॥ १६९

तद्दोषपरिहारार्थं मृत्युञ्जयजपं चरेत् ।
कृष्णां गां महिषीं दद्याद्दानेनारोग्यमादिशेत् ॥ १७०

சுக்ரதசையில் சனியினுடைய அந்தராந்தரபுக்தி
மீ 6. நாழி 30

फलम् —

निगळं मरणं नाशो द्दशोऽनर्थत्वमायतम् ।
भिक्षाचारो मनोदुःखं शुक्रस्याभ्यन्तरे शनौ ॥ १७१

சுக்ரதசையில் சனியினுடைய ஸூக்ஷ்மபுக்தி மீ 1,
தினம் 1, நாழி 40

फलम् —

रोदनं शत्रुपीडां च चतुष्पाज्जीवनाशनम् ।
स्वगोत्रे गुरुहानिः स्याद् भृगोः सूक्ष्मगते शनौ ॥ १७२

சுக்ரதசையில் சனியினுடைய ப்ராணபுக்தி
தினம் 5, நாழி 16, விநாடி 40

फलम्—

राजोपद्रवदुर्मार्गसुखविच्युतिरुग्भवः ।
नीचैः कलहसिद्धिः स्याच्छुक्रप्राणगते शनौ ॥ १७३

சுக்ரதசையில் புதபுக்தி வரு 2, மீ 10

फलम् —

शुक्रस्यान्तर्गते सौम्ये केन्द्रलाभत्रिकोणगे ।
तुङ्गे वा स्वर्क्षगे सौम्ये राजयोगकरं शुभम् ॥ १७४

सौभाग्यं पुत्रलाभं च सन्मार्गे धनलाभकृत् ।
षष्ठाष्टमव्यये सौम्ये रन्ध्रे पापसमन्विते ॥ १७५

कलहं मित्रसद्वेषं चतुष्पाज्जीवनाशनम् ।
क्रूरमासे ज्वरभयं कुत्सितान्नस्य भोजनम् ॥ १७६

जलप्रान्ते वनप्रान्ते मध्ये मासद्वयं वसेत् ।
राज्ञामन्योन्यकलश्चातीव क्लेश एव च ॥
दायेशात्केन्द्रकोणे वा लाभे वा बलसंयुते ॥ १७७

राजप्रीतिमनोऽभिलाषमतुलं दानार्चनं भूसुरैः
सौख्यं शास्त्रविचारधर्मनिरतं यानादिवस्त्रादिकम् ।
विद्यापुत्रकलत्रसौख्यमतुलं भूलाभमाहुर्बुधाः
शुक्रे सौम्यभुजिर्बलेन सहिते स्वोच्चादिवर्गस्थिते ॥ १७८

दायेशात् षष्ठरन्ध्रे वा व्यये वा बलवर्जिते ।
पापयुक्तेऽथवा दृष्टे चोराग्निव्रणभीतिकृत् ॥ १७९
अतिसारज्वरं मृत्युर्द्वितीयेशेऽथ कामगे ।
अपमृत्युज्वरभयं शीतज्वरविषाद्भयम् ॥ १८०
तद्दोषपरिहारार्थं तिलहोमायुतं चरेत् ।
क्रूरदानादिकं कुर्याच्छान्तिमाप्नोत्यसंशयः ॥ १८१

சுக்ரதசையில் புதனுடைய அந்தராந்தரபுக்தி மீ 4,
தினம் 24, நாழி 30

तत्फलम्—

अन्यस्त्रीषु सुसौख्यं च मार्तिकादिविभूषणम् ।
देवालयप्रतिष्ठां च शुक्रस्याभ्यन्तरे बुधे ॥ १८२

சுக்ரதசையில் புதனுடைய ஸூக்ஷ்மபுக்தி
தினம் 8, நாழி 20

फलम्—

बान्धवादिषु संपत्तिर्विवाहस्थगो नरः ।
स्त्रीपुत्रधनसंपत्तिर्भृगोः सूक्ष्मगते बुधे ॥ १८३

சுக்ரதசையில் புதனுடைய ப்ராணபுக்தி
தினம் 4, நாழி 43

फलम्—

सन्तोषो राज्यसंमानं नानादिग्देशसंपदा ।
नित्यमुत्साहवुद्धिः स्याच्छुक्रप्राणगते बुधे ॥ १८४

சுக்ரதசையில் கேதுபுக்தி வரு 1, மா 2

फलम्—

शुक्रस्यान्तर्गते केतौ लग्नादुपचये बली ।
शुभयुक्ते शुभैर्दृष्टे लग्नेशेनाथ संयुते ॥ १८५

शुभमेव फलं नित्यं स्नानदानजपादिकम् ।
भुक्त्यादौ शुभमाधिक्यं नित्यं मृष्टान्नभोजनम् ॥ १८६

प्रभुद्वारे जनक्लेशो देवाराधनमेव च ।
गमनागमनं चैव मध्ये किञ्चिद्धनव्ययः ॥ १८७

भुक्त्यन्तेऽल्पसुखं चेति शुभाशुभनिरूपणम् ।
संग्रामे विजयं राज्यं सर्वकार्यार्थसिद्धिदम् ॥ १८८

महाराजप्रसादं च गृहे शुभकरं भवेत् ।
षष्ठाष्टमव्यये वापि केन्द्रकोणगतेऽथ वा ॥ १८९

चोराग्निव्रणपीडा च बुद्धिनाशो महद्भयम् ।
दुःखं कलहकृच्छ्रं च देहालस्यं भविष्यति ॥ १९०

प्रमेहकामिलारोगः पुत्रभार्याविनाशनम् ।
निगळो बन्धुनाशश्च द्वितीयद्यूनगेऽथवा ॥ १९१

अपमृत्युभयं चैव ज्वराद्यत्यन्ततापकृत् ।
तद्दोषपरिहारार्थं दुर्गादेवीजपं चरेत् ।
छागादिपञ्चकं दद्यात् सर्वसंपत्प्रदायकम् ॥ १९२

சுக்ரதசையில் கேதுவினுடைய அந்தராந்தரபுக்தி
தினம் 24, நாழிகை 30

फलम्—

रोगोत्पत्तिश्च भैषज्यं राजकोपो धनक्षयः ।
वैषम्यबुद्धिः सर्वेषु शुक्रस्याभ्यन्तरे ध्वजे ॥ १९३

சுக்ரதசையில் கேதுவினுடைய ஸூக்ஷ்மபுக்தி தினம் 1,
நாழி 24, விநாடி 18

फलम्—

अतिरोगो महापीडा गरळाग्निशिरोव्यथा ।
सञ्चितार्थे मनःपीडा भृगोः सूक्ष्मगते ध्वजे ॥ १९४

சுக்ரதசையில் கேதுவினுடைய ப்ராணபுக்தி
நாழிகை 4, விநாடி 40

फलम्—

जीवात्मसदृशो हानिर्धनधान्यपरिच्छदः ।
त्यागभोगाय सर्वेषां शुक्रप्राणगते ध्वजे ॥ १९५

इति भार्गवनाडिकाग्रन्थे रव्यादिशुक्रपर्यन्त-
दशापञ्चभुक्तयः
समाप्ताः

आदित्यादिनवग्रहदेवताभ्यो नमः

——:o:——